# गुणज्ञानम्

**नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी।**
**गुणी च गुणरागी च विरलः सरलो जनः।।**

लोके गुणवन्तः एव विरलाः। गुणिनां गुणवत्त्वं ज्ञातुं समर्थाः ततोऽपि विरलाः, यतः गुणरहितः सामान्यः गुणिनम् अभिज्ञातुं न शक्नोति। अन्यः गुणी तथा ज्ञातुं शक्नोति, किन्तु प्रायः तादृशः गुणिनि मत्सरी भवति। स्वयं गुणी सन् अन्यं गुणिनं यः ज्ञातुं शक्नुयात् तादृशः सरलः जनः विरलः एव।

काचित् कथा श्रूयते– कश्चन चित्रकारः उत्तमम् एकं चित्रं विलिख्य मार्गे एकत्र उत्तोल्य अधः लिखितवान्– 'अत्रत्यान् दोषान् सूचयन्तु' इति। एकदिनाभ्यन्तरे एव सहस्रशः जनैः कृतैः दोषसूचकचिह्नैः तत् चित्रं विरूपताम् अगच्छत्। अनन्तरदिने तादृशम् एव अपरं चित्रं विलिख्य मार्गे स्थापयन् सः अधः लिखितवान्– 'अत्रत्यान् गुणान् सूचयन्तु कृपया' इति। केनापि चित्रे अङ्कनं न कृतम्। एषः हि लोकः!

सर्वेषु अपि दोषाः गुणाः च भवन्ति एव। दोषरहितः न कोऽपि अस्ति, ऋते परब्रह्म। सामान्याः स्वकुटुम्बादिनिर्वहणव्यग्राः, धनसम्पादनतत्पराः गुणादीनां विषये न चिन्तयन्ति एव। चिन्तयन्तोऽपि दोषं दृष्ट्वा ततः पराङ्मुखाः भवन्ति। सर्वत्र अपि दोषाः एव सर्वप्रथमं दृष्टिपथम् आगच्छन्ति। गुणान् ज्ञातुं काचित् योग्यता अपेक्षिता भवति। दोषरहिता व्यक्तिः न भवति एव इत्यतः सदोषत्वं सर्वप्रथमं हृत्पूर्वकम् अङ्गीकरणीयम्। दोषदर्शनानन्तरम् अपि उदारता आश्रयणीया। कीदृशाः गुणाः सन्ति इति विचिकित्सकबुद्ध्या अवलोकनं करणीयम्। मात्सर्यरहितया बुद्ध्या गुणस्य अङ्गीकारः प्रोत्साहश्च करणीयः। तदा एव गुणिनः वर्धन्ते, वयम् अपि वर्धामहे।

लोके भवता गुणिनः न दृश्यन्ते वा? तर्हि प्रथमं भवान् आत्मावलोकनं करोतु। भवतः दृष्टिं परिशुद्धां करोतु। शुद्धया दृष्ट्या दृष्टं चेत् सर्वत्र गुणिनः दृश्यन्ते, नक्षत्राणि इव!

# सकर्मकाकर्मकव्यवस्था

शिष्यः- श्रीमन्! कः धातुः सकर्मकः, कश्च अकर्मकः इति कथं ज्ञातुं शक्यते?

आचार्यः- धात्वर्थं ज्ञात्वा एतत् सकर्मकाकर्मकत्वं ज्ञातव्यं भवति। धातोः 'किम्' इति (कः/का इति वा) प्रश्नः करणीयः। द्वितीयाविभक्त्यन्तम् उत्तरं लब्धं चेत् सः धातुः सकर्मकः। अन्यथा अकर्मकः। उदाहरणार्थं 'पठ' धातुं परिशीलयाम। पठति – कं पठति? – ग्रन्थं पठति। 'ग्रन्थम्' इति द्वितीयाविभक्त्यन्तम् उत्तरं प्राप्तम् इत्यतः पठधातुः सकर्मकः। अन्यत् उदाहरणं – कम्पते – कं/कां/किं कम्पते? ...........। उत्तरं नास्ति। अतः कम्प्धातुः अकर्मकः।

शि - वर्धते – किं वर्धते? सस्यं वर्धते। अतः 'वर्धते' इत्येतत् किं सकर्मकम्?

आ - एतदर्थम् एव खलु मया उक्तं – किम् इत्यस्य उत्तरं द्वितीयाविभक्त्यन्तं भवेत् इति। वृक्षः वर्धते इत्येव वयं वदामः, न तु वृक्षं वर्धते इति। सस्यशब्दः नपुंसकलिङ्गः इत्यतः प्रथमायां द्वितीयायां च विभक्तौ तस्य समानं रूपम्। अतः भवति भ्रान्तिः उत्पन्ना।

शि - एवं च निश्चितं यत् धात्वर्थज्ञानानन्तरम् एव वयं सकर्मकाकर्मकव्यवस्थां ज्ञातुं शक्नुमः इति।

आ - आम्। एषा तु सामान्या व्यवस्था। एतस्याः अपवादाः अपि भवन्ति एव। तद्यथा–

धातोरर्थान्तरे वृत्तेः धात्वर्थेनोपसङ्ग्रहात्।
प्रसिद्धेः अविवक्षातः कर्मणोऽकर्मिका क्रिया।।

१) **अर्थान्तरे वृत्तिः** – सकर्मकः अपि धातुः कदाचित् अर्थान्तरे प्रवृत्तः अकर्मकत्वं प्राप्नोति। यथा–

i) कर्मकरः भारं वहति।

ii) नदी वहति।

प्रथमे उदाहरणे वहधातुः सकर्मकः। सः एव धात्वर्थः। द्वितीये तु उदाहरणे सः अकर्मकः जातः, यतः सः अर्थान्तरे प्रवृत्तः।

२) **धात्वर्थेन उपसङ्ग्रहः** – यथा – नृत्यति, जीवति इत्यादयः। नृत् धातोः अर्थः– 'गात्रविक्षेपं करोति' इति। जीव् धातोः अर्थः– 'प्राणधारणं करोति' इति। एतदुभयम् अपि धात्वर्थेन उपसङ्गृहीतम् इत्यतः तयोः अकर्मकत्वम्।

३) **प्रसिद्धिः***– यथा – मेघः वर्षति। वर्षति इत्यत्र जलम् इत्यस्य सुप्रसिद्धत्वम्। अतः वर्षति इत्येतत् अकर्मकम्।

शि - श्रीमन्! वर्षति इत्यत्र कर्म यदि न सुप्रसिद्धं तर्हि स च धातुः सकर्मकः भवति वा?

आ - आम्। यथा – इन्द्रः सुवर्णं वर्षति। अत्र सुवर्णस्य वर्षणं न सुप्रसिद्धम्। अतः अत्र 'वर्षति' इत्यस्य सकर्मकत्वम्।

शि - श्रीमन्! गत्यर्थकाः धातवः संस्कृते सकर्मकाः वा?

आ - आम्। प्रादेशिकभाषासु तेषाम् अकर्मकत्वं दृश्यते। किन्तु संस्कृते ते सकर्मकाः। यथा– रामः शालां गच्छति।

अत्र एतदपि स्मर्तव्यं यत् गत्यर्थश्रवणमात्रेण सकर्मकत्वं निर्णेतुं न शक्यते। उदाहरणार्थं 'पत्लृ' धातुं पश्यतु। सः सामान्यव्यवहारे अकर्मकः खलु?

शि - आम्। 'पर्णं भूमौ पतति' इत्येव वाक्यं प्रयुञ्ज्महे वयम्।

आ - एषः एव धातुः (पतति) सकर्मकत्वेन अपि प्रयुक्तः दृश्यते। यथा–

i) दिशः पपात पत्रेण वेगनिष्कम्पहेतुना .... (रघु० १५/७८)

ii) यथा महान्तमध्वानम् आशया पुरुषः पतन्.....(महा०शा० १०/११)

---

* अविवक्षातः अकर्मकत्वं लोकव्यवहारे न प्रसिद्धम् इत्यतः अत्र उदाहरणं न प्रदर्शितम्।



# चन्दमामा

अक्टोबर्-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः – 'चक्रपाणिः'    सञ्चालकः – 'नागिरेड्डी'

'स्वातन्त्र्यप्राप्त्यनन्तरं राजभाषाप्रस्तावसन्दर्भे सभाध्यक्षः स्वकीयं मतं हिन्दीपरतया प्रयुक्तवान्, येन संस्कृतं राजभाषास्थानं प्राप्तुं न अशक्नोत्' इति वार्ता सर्वैः श्रुता एव। एतस्य श्रवणेन मनसि कश्चन प्रश्नः उदेति – 'यदि तदा संस्कृतं राजभाषा अभविष्यत् तर्हि समग्रे देशे सामान्यानां पाठनार्थं संस्कृतज्ञानां सामर्थ्यं पर्याप्तम् अभविष्यत् वा?' इति। यथार्थतया चिन्त्यमाने 'न' इत्येव खलु उत्तरम्?

कदाचित् वस्तुतत्त्वविवेचकेन संस्कृताभिमानिना पृष्टम्– 'संस्कृतस्य राष्ट्रभाषात्वम् इच्छन्ति खलु भवन्तः? शालासु संस्कृतं संस्कृतमाध्यमेन पाठनीयम् इति आज्ञा आगता चेत् तथा कर्तुं भवतां संस्कृतज्ञानां सामर्थ्यम् अस्ति वा?' इति। वस्तुतः सगम्भीरं चिन्तनीयः अयं विषयः। संस्कृतसम्भाषणे निरर्गलता, संस्कृतेन एव संस्कृतस्य पाठने सामर्थ्यं च अधिकांशानां नास्ति इति तु कटुसत्यम्। एवं सामर्थ्ये पर्याप्तमात्रेण अविद्यमाने, उच्चस्थानस्य प्राप्तौ इच्छा अनैतिकी एव खलु?

उन्नतं स्थानं प्राप्तुम् इष्यते चेत् सर्वप्रथमं तदर्थं सामार्थ्यम् अभिवर्धनीयम्। अन्यथा प्राप्तम् अपि स्थानम् अचिरात् च्युतं भवेत्।

सम्पुटः – ५    अक्टोबर् – १९८८    सञ्चिका – ६

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

CHITRA

रसप्रश्नाः –

# सीतादर्शनम्

[वाल्मीकिरामायणस्य आधारेण हनूमता कृतं सीतादर्शनम् अधिकृत्य केचन सूक्ष्माः प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तर जानन्तु।]

१) रावणः सीताम् अशोकवने किमर्थं स्थापितवान्?

२) हनूमान् अशोकवने किंजातीयक वृक्षम् आरुह्य उपविष्टवान्?

३) अशोकवने सर्वप्रथमं सीतां दृष्ट्वा हनूमान् कथं सीतात्वेन तस्याः प्रत्यभिज्ञान प्राप्तवान्?

४) रावणेन सीतायै वर्षात्मकः अवधिः दत्तः आसीत्। यदा हनूमान् सीतां दृष्टवान् तदा कतिमासात्मकः अवधिः शिष्टः आसीत्?

५) विवाहविषये अनुरोधं कुर्वते रावणाय सीता कथम् उत्तरं दत्तवती?

६) 'सीतायाः इष्टसिद्धिः भविष्यति' इति स्वप्नस्य आधारेण उक्तवत्याः राक्षस्याः नाम किम्?

७) आत्महत्यां कर्तुं सङ्कल्पितवती सीता कया उद्बन्धनं कर्तुम् उद्युक्ता?

८) आत्महत्याप्रयत्नं सीता किमर्थं त्यक्तवती?

९) हनूमान् स्वदर्शनेन सीतायां जायमानस्य उद्वेगस्य निवारणार्थं किं कृतवान्?

१०) हनूमान् सीतायै कीदृशम् अङ्गुलीयकं दत्तवान्?

उत्तराणि–

(१) विशेषकारणं किमपि नास्ति। अपहृत्य आनीता सीता कुत्रापि स्थापनीया आसीत्। अशोकवने स्थापिता, तावदेव। (२) शिंशुपावृक्षम् आरुह्य। (३) सीतया धृतानि आभरणानि दृष्ट्वा, येषां च वर्णनं पूर्वं रामेण कृतम् आसीत्। (४) मासद्वयात्मकः अवधिः। (५) तृणं पुरतः संस्थाप्य। (६) त्रिजटा। (७) स्वकीयया वेण्या। (८) तत्समये जातानि शुभानि निमित्तानि दृष्ट्वा। (९) वृक्षे उपविश्य रामचरित्रं यथावत् गीतवान्। (१०) रामनामाङ्कितम्।

# रसवार्ताः



## 'मोहिञ्जोदारो'नाशः कथं सम्पन्नः?

अतिप्राचीनां मोहिञ्जोदारोसंस्कृतिं सर्वे जानन्ति एव। किन्तु तस्याः नाशविषये इदमित्थम् इति वक्तुं कोऽपि न शक्नोति। रशियादेशीयः पुरातत्त्वशास्त्रवेत्ता एं. दिमिट्रेव् अभिप्रैति यत् कादाचित्कतया प्रवृत्तात् रासायनिकपदार्थानां स्फोटतः 'मोहिञ्जोदारो' नष्टम् इति।

## नूतनः प्रवालद्वीपः

पूर्वमलेशियाप्रदेशे कुडातुतः ४० मैल् दूरे ईशान्यसमुद्रे कश्चन लघुप्रवालद्वीपः समुत्पन्नः अस्ति।






## अपूर्वा मैत्री!

श्रीलङ्कादेशीयः कश्चन कृषिकः स्वकीयाभ्यां शुनकाभ्यां सह अरण्यं गतः प्रमादवशात् तत्रैव मरणं प्राप्तवान्। तदा मृतस्य यजमानस्य रक्षणार्थम् एकः शुनकः तत्रैव अतिष्ठत्। अपरः शुनकः धावन् ग्रामम् आगत्य विविधैः भषणप्रकारैः यजमानकुटुम्बीयान् मृतस्य यजमानस्य समीपम् अनयत्।

## राज्ञ्याः आभरणानि!

३,२०० वर्षेभ्यः पूर्वं जातस्य इजिप्ट्चक्रवर्तिनः फरावो रामसेसुमहोदयस्य पत्न्याः नेफर् टिटीमहोदयायाः शिथिलायाः शवपेटिकातः तया तत्काले धृतानि आभरणानि एषु दिनेषु प्राप्तानि सन्ति।



# प्रामाणिकता

कस्यचित् राज्ञः मन्त्री दिवङ्गतः। तदा मन्त्रिकुमारः मन्त्रिपदव्यां नियुक्तः अभवत्। यदा मन्त्रिकुमारः मन्त्रिपदव्यां नियुक्तः तद्दिने एव राज्ञः पुरतः काचित् समस्या आगता। राज्यस्य करसङ्ग्रहणाधिकारी धनेन सह पलाय्य विदेशे कुत्रापि आश्रयं प्राप्तवान् आसीत्।

राजा नूतनं मन्त्रिणम् उक्तवान्– "एतत्सन्दर्भे उद्योगदानतः पूर्वम् अभ्यर्थिनः गुणाः परीक्षणीयाः। एतत् भवता शक्यते वा? भवतः पिता चेत् नूतनम् उपायम् असूचयिष्यत्" इति।

"प्रभो! भवान् डिण्डिमघोषपूर्वकम् अभ्यर्थिनः सङ्गृह्णातु। तथा आगतेषु प्रामाणिकः कः इति अहं सूचयिष्यामि" इति उक्तवान् मन्त्री।

अधिकारस्थानं प्राप्तुं दश अभ्यर्थिनः आगताः। मन्त्री तान् सूचितवान् यत् भवद्भिः अन्धकारमयं प्रकोष्टम् अतिक्रम्य महाराजसमीपम् आगन्तव्यम् इति। ते तथैव आगतवन्तः।

तदा मन्त्री तान् उक्तवान्– "दशवारं मां प्रदक्षिणीकुर्वन्तु। तथा किमर्थम् इति अनन्तरं वदिष्यामि" इति।

एकः एव तथा कृतवान्। अन्ये तथा करणं निराकृत्य एकत्र स्थितवन्तः। मन्त्री प्रदक्षिणीकृतवन्तं तं प्रदर्श्य महाराजम् उक्तवान्– "प्रभो! एषः प्रामाणिकः। एतं करसङ्ग्रहणाधिकारिस्थाने नियोक्तुम् अर्हति भवान्" इति।

राजा आश्चर्येण मन्त्रिणं दृष्टवान्। तदा मन्त्री उक्तवान्– "एतेषाम् आगमनमार्गे अन्धकारमये प्रकोष्ठे स्थलद्वये मया रजतनाणकानां राशिः स्थापितः आसीत्। एते नव जनाः अपि ततः कानिचन नाणकानि कोषे स्थापितवन्तः। वेगेन प्रदक्षिणीकरणसमये नाणकशब्दः श्रूयते। अतः ते तथाकर्तुं निराकृतवन्तः" इति।

परीक्षणेन ज्ञातं यत् मन्त्रिणः वचनं सत्यम् इति। राजा तं प्रामाणिकं करसङ्ग्रहणे नियुक्तवान्।





# तथास्तुवादिन्यौ

गोपालपुरनामके ग्रामे नरसिंहः नाम कश्चन कृषिकः आसीत्। सः शीघ्रकोपी। तस्य जिह्वा समग्रे ग्रामे प्रसिद्धा आसीत्। तस्य पत्न्याः नाम भानुमतिः।

विवाहानन्तरं कानिचन दिनानि भानुमती पत्युः एतादृशात् व्यवहारात् भीता आसीत्। दिनेषु गतेषु भानुमती पत्युः स्वभावं सम्यक् ज्ञातवती। अतः सा कदाचित् पतिं प्रार्थितवती– "किमर्थं भवान् विना कारणं कुपितः भवति? एतादृशम् अभ्यासं त्यजतु तावत्" इति।

तदा नरसिंहः कोपेन तां पश्यन्– "रे! माम् अपि उपदेष्टुम् उद्युक्ता वा भवती? इतः परं पुनः कदाचित् एवं यदि वदेत् तर्हि भवत्याः अस्थीनि चूर्णीकृतानि भवेयुः। स्मरतु" इति गर्जितवान्।

ग्रामीणाः नरसिंहस्य स्वभावं सम्यक् जानन्ति। अतः इदानीं कोऽपि नरसिंहेन सह वार्तालापम् एव न करोति।

एकदा नवरात्रोत्सवसन्दर्भे ग्रामस्य मध्ये स्थितस्य दुर्गामन्दिरस्य पुरत हरिकथा-कालक्षेपस्य व्यवस्था जाता। हरिकथाकारः अपि सुप्रसिद्धः एव आसीत्।

हरिकथारम्भदिने रात्रिभोजनसमये नरसिंहः पत्नीम् उक्तवान्– "अये! गार्दभमुखि! यदि किञ्चित् शीघ्रं परिवेषयेत् तर्हि हरिकथा श्रोतुं शक्येत" इति।

भानुमती विना वचनं त्वरया परिवेषणं कृतवती। नरसिंहः वेगेन भोजनं समाप्य प्रकोष्ठे मञ्चस्य उपरि उपविशन्– "भोः कुलकलङ्किनि! शीघ्रं गिलतु। अन्यथा हरिकथायाः आरम्भः भवेत्" इति उक्तवान्।

भानुमती त्वरया भोजनं समाप्य पात्राणि



प्रक्षाल्य भोजनशालां गोमयेन उपलिप्तवती। किन्तु अत्रान्तरे दुर्गामन्दिरतः श्रूयमाणः कोलाहलशब्दः स्थगितः। हरिदासस्य गम्भीरः ध्वनिः श्रुतः।

"..... रुचिकराणां भक्ष्याणां खादनार्थं, मधुराणां वचनानां कथनार्थं च भगवता मनुष्याय मुखं दत्तम् अस्ति। केचन पूर्वापरम् अनालोच्य एतद्द्वारा निरन्तरं निन्दनं कुर्वन्ति। एवं कदापि न करणीयम्। यतः तथास्तुवादिन्यः देवताः सदा अस्मान् परितः तिष्ठन्ति। ते यदि 'तथास्तु' इति वदेयुः तर्हि अस्माभिः निन्दनसमये यत् उक्तं तत् सत्यम् एव भविष्यति। अतः यावच्छक्यम् उत्तमानि वचनानि एव वक्तव्यानि अस्माभिः। निन्दनं करणीयं चेत् अपि शब्दाः जागरूकतया प्रयोक्तव्याः। यत् स्फुरति तस्य कथनं न हिताय। ......"

एवं रिदासस्य कथनं प्रवर्तमानम् आसीत्। हरिकथारम्भं ज्ञातवतः नरसिंहस्य उग्रता प्रवृद्धा। सः झटिति मञ्चतः उत्थाय— "अये मन्दे! पाकशालायाम् इतोऽपि किं तत् महत् कार्यं प्रचलति? किम् अद्य समाप्येत वा तत्?" इति उच्चैः पृष्टवान्।

"अहम् आगता एव। मुखक्षालनं कुर्वती अस्मि" इति कूपसमीपात् एव उक्तवती भानुमती।

"छी! भवत्या मुखं दग्धं भवतु नाम। सर्वदा भवत्याः कोऽपि व्याजः अस्ति एव" इति असमाधानेन गर्जितवान् नरसिंहः।

अनन्तरक्षणे एव भानुमती उच्चैः 'हाऽऽ" इति आक्रोशनं कृत्वा "हा देव! मुखे सर्वत्र तापः! महान् तापः। अहं मृता" इति वेदनया आक्रन्दनं कुर्वती मुखस्य अपरि जलं पातितवती।

भानुमती वेदनां सोढुम् अशक्ता उच्चैः क्रन्दनं करोति। नरसिंहः तां कस्यचित् वैद्यस्य गृहं नीतवान्।

"वैद्यः भोजनं कुर्वन् अस्ति। किञ्चित्कालम् उपविशतु तावत्" इति सूचितवती वैद्यस्य पत्नी।

भानुमती नरसिंहः च गृहस्य पुरतः उपविष्टवन्तौ। भानुमती तु मुखस्थां वेदनं सोढुम् अशक्ता कम्पते। पञ्चदशसु निमेषेषु

अतीतेषु अपि वैद्यः बहिः न आगतवान्।

एतत् दृष्ट्वा कुपितः नरसिंहः पत्नीं पश्यन्– "एषः वैद्यः, उत बकासुरः? भोजनार्थम् एतावान् विलम्बः वा! तस्य उदरं दग्धं भवतु नाम" इति उक्तवान्।

त्वरया भोजनं समाप्य बहिः आगच्छन् वैद्यः अकस्मात् उत्पन्नाम् उदरवेदनां सोढुम् अशक्तः तत्रैव पतितवान्। 'हा हा!' इति उद्गारः आगतः तस्य मुखात्।

"हा हन्त! मम पत्युः किं जातं भोः!" इति आक्रन्दनम् आरब्धवती वैद्यस्य पत्नी। नरसिंहः असमाधानेन पत्न्या सह अन्यस्य वैद्यस्य समीपं गतवान्।

सः वैद्यः प्रथमदर्शनेन एव– "पञ्चविंशतिं रूप्यकाणि ददातु" इति सूचितवान्।

तदा नरसिंहः– "रोगिणः परीक्षणस्य चिकित्सायाः च अनन्तरं खलु शुल्कस्य विचारः?" इति पृष्टवान्।

वैद्यः किमपि अनुक्त्वा तत्रैव उत्तोलितं फलकं नरसिंहाय प्रदर्शयन् अन्तः गतवान्। फलके लिखितम् आसीत्– "पञ्जीकरण-शुल्कं रू. २५-००, परीक्षाशुल्कं रू. ५०-००, चिकित्साशुल्कं रू. १००-००" इति।

तत् पठित्वा– "गार्दभेयस्य एतस्य मातुः उदरे अग्निः पततु नाम। सेवावृत्तिं वाणिज्यसाधनं भावयति एषः" इति वदन् कोषतः पञ्चविंशतिं रूप्यकाणि बहिः आनीतवान् नरसिंहः।





वैद्यः बहिः आगत्य धन स्वीकृत्य भानुमतिं परीक्षितुं यावत् उद्युक्तः तावता वैद्यस्य माता– "हा पुत्रक! शीघ्रम् आगच्छतु भोः! हा राम! कृष्ण! भगवन्! उदरे तापः भोः" इति आक्रोशनं कृतवती।

मातुः आक्रोशनं श्रुत्वा वैद्यः अन्तः धावितवान्। नरसिंहः किञ्चित्कालं यावत् प्रतीक्षां कृत्वा– "एषः वैद्यः उत वणिक् इत्येव न ज्ञायते। धनं गच्छतु नाम। आवाम् अन्यत्र गच्छाव" इति उक्त्वा पत्न्या सह अन्यस्य वैद्यस्य समीपं प्रस्थितवान्।

एवं गमनसमये मार्गे तदीयः आत्मीयः शेषाद्रिः अभिमुखम् आगतवान्। 'चिकित्सार्थम् इतोऽपि कियत् धनम् आवश्यकं भवेत् इति न जाने' इति आलोच्य नरसिंहः शेषाद्रिं समीपम् आहूय– "भवतः कोषे धनम् अस्ति चेत् ददातु। श्वः प्रातः प्रत्यर्पयिष्यामि" इति उक्तवान्।

तदा शेषाद्रिः असहायकतां प्रकटयन्– "अनिवार्यकारणतः एव भवान् मां धनं पृच्छन् स्यात्। किन्तु किं करोमि, मम समीपे किञ्चिदपि धनं नास्ति" इति उक्त्वा अग्रे गन्तुम् उद्युक्तः।

तदा नरसिंहः पत्नीम् उक्तवान्– "धनम् अस्ति चेदपि नास्ति इति वदति चोरः एषः" इति।

अपरक्षणे एव शेषाद्रिः वेगेन प्रत्यागत्य नरसिंहं कण्ठे गृह्णन्– "भोः, विना विरोधं कोषस्थं समग्रं धनं ददातु। नो चेत् प्राणैः वञ्चितः भवेत् भवान्" इति क्रोधेन उक्तवान्।

नरसिंहः अन्यत् किमपि कर्तुम् अशक्तः सर्वं धनं तस्मै अर्पितवान्।

भानुमती तु एतत् किमपि अगणयन्ती– "हा हन्त! मम तापः इतोऽपि वर्धते भोः" इति आक्रोशनं कृतवती।

एतावतत्पर्यन्तं प्रवृत्ताभिः घटनाभिः नरसिंहः अतीव उद्विग्नः आसीत्। अतः सः पत्न्याः मुखं स्वहस्तेन दृढं गृहीत्वा– "अये राक्षसि! यावत् अन्यस्य वैद्यस्य गृहं प्राप्स्यामः तावत् सहनया तिष्ठतु भोः!" इति उक्तवान्।

तत्क्षणे एव भानुमती राक्षसी सञ्जाता। तस्याः घोरं रूपं दृष्ट्वा नरसिंहः भीतः सन्

आक्रोशनं कुर्वन् ततः पलायितवान्। राक्षसरूपिणी भानुमती तम् अनुसृत्य धावितवती। एवं धावन्तौ तौ ग्रामात् बहिः स्थिताम् आम्रवाटिकां प्राप्तवन्तौ। नरसिंहः मुखं परिवृत्य पृष्ठतः दृष्टिं प्रसारितवान्। तेन तत्र पत्नी न दृष्टा। देवताद्वयं तस्य दिशि एव आगच्छत् आसीत्।

नरसिंहः आश्चर्येण– "भवत्यौ के?" इति पृष्टवान्।

"आवाम् तथास्तुवादिन्यौ देवते" इति ताभ्याम् उत्तरं दत्तम्।

'एतावत्पर्यन्तं यत् उक्तं तत् किमर्थं सत्यं जातम्' इति ज्ञातवान् नरसिंहः।

सः दूरात् धावन्तीम् आगच्छन्तीं राक्षसरूपिणीं पत्नीं प्रदर्श्य– "कृपया अहं क्षन्तव्यः। मम पत्नी पूर्वतनं रूपं यथा प्राप्नुयात् तथा वरेण अनुग्रहणीयः अहम्" इति दैन्येन प्रार्थितवान् नरसिंहः।

"तथास्तु। भवतः पत्नी राक्षसरूपात् मुक्ता भविष्यति। सा भवतः घोरव्यवहारात् अपि मुक्ता भविष्यति। पूर्वापरम् अनालोच्य निरन्तरं निन्दनात्, पुरतः स्थितः क्षणकालं भीतः भवेत्। किन्तु अनन्तरकाले प्रयोजनं किमपि न सिध्यति। अप्रियता सम्पादिता भवति, तावदेव। गौरव-विश्वासादयः ततः नश्यन्ति। सदा स्मरतु, एतत्" इति उक्त्वा ते तथास्तुवादिन्यौ देवते अदृश्यतां गतवत्यौ।

राक्षसरूपात् मुक्ता भानुमती पत्युः समीपम् आगत्य– "किं जातं भवतः? किमर्थं मुखे भीतिचिह्नानि? अर्धरात्रसमये आवाभ्याम् ग्रामात् बहिः अत्र किमर्थम् आगतम्? किम् एतत् विचित्रम्?" इति आश्चर्येण पृष्टवती।

"तत्सर्वम् अनन्तरं विस्तरेण निवेदयिष्यामि। आगच्छतु, गृहं गच्छाव" इति उक्त्वा पत्न्या सह गृहं प्रति प्रस्थितवान् नरसिंहः।

"अये, दास्याः पुत्रि! मुखं पिधाय तूष्णीम् आगच्छतु" इति पत्या यत् न उक्तं तत् दृष्ट्वा भानुमती अतीव सन्तुष्टा अभवत्।





# परिवर्तनम्

कस्मिंश्चित् अरण्यसमीपस्थे ग्रामे कश्चन व्याधः निवसति स्म। सः अरण्ये सञ्चरन् निर्दयतया प्राणिनः मारयति स्म, तेनैव जीवनं यापयति स्म च। अतः जनाः तं 'निर्दयी व्याधः' इत्येव आह्वयन्ति स्म।

एकदा सः व्याधः बहुधा अटनानन्तरम् अपि एकम् अपि पशुं न प्राप्तवान्। अन्ते महता प्रयत्नेन सः एकं हरिणशिशुं दृष्ट्वा बाणं प्रयुक्तवान्। हरिणशिशुः भूमौ पतितः। तं स्कन्धे आरोप्य सः गृहं प्रति प्रस्थितवान्।

मार्गे कश्चन संन्यासी सम्मुखम् आगतः। सः व्याधं दृष्ट्वा– "भोः, अत्र आगच्छतु" इति आहूतवान्।

निर्दयी व्याधः मुनेः समीपं गत्वा विनयेन नमस्कृत्य– "उपस्थितोऽस्मि श्रीमन्!" इति उक्तवान्।

"व्रणितः सः हरिणशिशुः वेदनया पीड्यमानः अस्ति। तं जागरूकतया अधः अवतारयतु तावत्" इति सूचितवान् मुनिः। व्याधः तथैव कृतवान्। तदा मुनिः कमण्डलुजलेन सेचनं कृतवान्।

तदा हरिणः व्याधं आशापूर्णया दृष्ट्या पश्यन् मानवभाषया अवदत्– "अये! मां कृपया मुञ्चतु। मम मातापितरौ माम् अपश्यन्तौ एतावता दयनीयाम् अवस्थाम् आप्तवन्तौ स्याताम्। पुत्रवात्सल्यं भवान् अपि जीवने अनुभूतवान् स्यात् एव। पुत्रम् अपश्यन् भवान् किं निरातङ्कं स्थातुं शक्नोति?" इति।

तदा सः व्याधः स्वकीयान् पुत्रान् स्मृतवान्। 'प्रतिदिनम् अहं निर्दयं प्राणिहिंसां यत् करोमि तत् मम पुत्राणां निमित्तम् एव। पुत्रवात्सल्यात् अहं यथा अनिर्वचनीयम् आनन्दम् अनुभवामि तथैव सर्वे प्राणिनः अपि

पुत्रकारणात् आनन्दम् अनुभवन्ति एव' इति आलोच्य व्याधः हरिणशिशोः बन्धनम् अपनीतवान्। सस्यरसैः हरिणस्य व्रणान् लेपयित्वा स्वेच्छया गन्तुम् अवकाशं कल्पितवान्। अनन्तरं सः स्वगृहं गतवान् अपि। तद्दिने तस्य गृहे सर्वे उपवासम् आचरितवन्तः।

अनन्तरदिने व्याधः पुनः अपि अरण्यं गत्वा एकं हरिणं मारयित्वा स्कन्धे आरोप्य गृहं प्रति प्रस्थितवान्। एतद्दिने अपि मार्गे दृष्टः संन्यासी हरिणम् अवतारयितुं सूचयन् हरिणं कमण्डलुजलेन सिक्तवान्।

तदा सः हरिणः मानवभाषया व्याधम् अवदत्– "भोः आसन्नप्रसवायाः इतस्ततः चलितुम् अशक्तायाः मम पत्न्याः निमित्तम् अहम् आहारम् आनेतुम् उद्युक्तः आसम्। तत्समये भवान् मम उपरि बाणं प्रयुक्तवान्। किम् एतत् न्याय्यम्? किम् एतत् धर्मसम्मतम्? अहं वक्तुं न शक्नुयां, तथापि भवतः इव ममापि सुखदुःखादयः सन्ति एव। आत्मसमानतया मां पश्यतु भोः" इति।

पत्नी यदा प्रसववेदनाम् अनुभवति स्म तदा आत्मना अनुभूतं मनःक्लेशं स्मृतवान् व्याधः। अतः सः मौनेन हरिणस्य गमनार्थम् अवकाशं कल्पितवान्। यदा सः गृहं गतवान् तदा बुभुक्षया तप्यमानानां पत्नीपुत्रादीनां म्लानानि मुखानि दृष्टवान्।

एतत् दृष्टवतः व्याधस्य हृदये सङ्कटम् उत्पन्नम्। सः झटिति अरण्यं गत्वा मुनिं दृष्ट्वा नमस्कृत्य– "स्वामिन्!



भवत्कारणतः मयि दयादाक्षिण्यादयः जागरिताः। किन्तु इदानीम् आहाराभावतः मम पत्नीपुत्रादयः मूर्च्छावस्थां गताः सन्ति। एतत् घोरं दृश्यम् अहं द्रष्टुं न शक्नोमि। एतस्य सर्वस्य कारणं भवान् एव। अतः भवतः पुरतः एव आत्महत्यया प्राणाः त्यक्तव्याः इति अहम् अत्र आगतवान्'' इति उक्तवान्।

एतत् श्रुत्वा संन्यासी मन्दहासपूर्वकम् उक्तवान्— ''मम उद्देशः तु प्राणिहिंसातः भवतः निवारणम् आसीत्। भवान् बुभुक्षया सकुटुम्बं मरणं प्राप्नोतु इति मम इच्छा सर्वथा न आसीत्। विशाले अस्मिन् प्रपञ्चे जीवनार्थं किं मृगया एकः एव उपायः? अन्ये जीवनोपायाः किं न सन्ति?'' इति।

''उपायाः बहवः स्युः। किन्तु ते मम सामर्थ्यानुगुणं भवेयुः खलु?'' इति सविनयम् उक्तवान् व्याधः।

तदा संन्यासी समीपे चरन्तीः तिस्रः गाः प्रदर्श्य— ''एताः तिस्रः गाः भवान् नयतु। ताः प्रीत्या सम्यक् पोषयतु च। ताभ्यः यत् क्षीरं प्राप्यते तत् विक्रीय सुखेन जीवतु च'' इति सूचितवान्।

मुनेः वचनात् सन्तुष्टः व्याधः गोभिः सह स्वगृहं गतवान्। गोभिः सह अरण्यात् प्रत्यागच्छन्तं व्याधं दृष्ट्वा ग्रामीणाः सर्वे आश्चर्यचकिताः अभवन्।

व्याधः तान् प्रवृत्तं समग्रं निवेद्य— ''अद्य आरभ्य मया प्राणिहिंसा सर्वथा परित्यक्ता अस्ति। सात्त्विकं जीवनं मम लक्ष्यम्'' इति उक्तवान्।

एतत् श्रुत्वा सर्वे ग्रामीणाः अतीव सन्तुष्टाः। सहकारबुद्ध्या ते गोशाला-निर्माणार्थं व्याधाय वेणु-काष्ठादिकं दत्तवन्तः। अन्ये केचन पश्वाहारं दत्तवन्तः।

एवं 'निर्दयी व्याधः' इति ख्यातः व्याधः मृगयावृत्तिं सर्वथा परित्यज्य गोपालकः अभवत्। सः गोपालनं सम्यक् कुर्वन् क्षीरविक्रयणात् प्राप्तेन धनेन पत्नीपुत्रादीन् सम्यक् परिपालयन् सुखेन जीवितवान्।






# १०

[सुवर्णखनीराज्यम् आगतः मान्त्रिकः उपवासव्याजेन राजानं पर्वतं नीत्वा सुवर्णविग्रहस्य पृष्ठतः स्थितायां गुहायां वञ्चनया बन्धने स्थापयित्वा तदीयं वेषभूषणादिकं धृत्वा बहिः आगतवान्। अन्यत्र जलपातम् अतिक्रम्य गतः विनोदः मुनेः साहाय्येन मानवलोकस्य सीमाम् अतिक्रम्य स्वप्नभूमिं प्राप्य तत्र एकं विचित्रं दृश्यं दृष्टवान्। तदनन्तरम् ......]

समीपस्थे खाते स्थितः कश्चन विकृताकारः, हस्तेन एकां दीर्घां नलिकां गृहीत्वा तदा द्वारा किमपि पश्यन् आसीत्। तस्य पुरतः कन्दुकाकारकं किञ्चित् वस्तु दृश्यते स्म। सः नलिकायाः एकम् अन्तं दन्तैः दृढं गृहीत्वा धमति स्म। एवं करणसमये विचित्रा काचित् कान्तिः तस्य मुखं प्रविशति स्म। किञ्चित्कालानन्तरं तत् कन्दुकं कदाचित् रक्तवर्णीयं, पुनः कदाचित् कृष्णवर्णीयं च सत् धूमम् उत्पादयति स्म। सः विकृताकारः पुरुषः तं धूमं चूषति। तदा तस्य नेत्रे उलूकस्य नेत्रे इव प्रकाशतः।

एतत् दृश्यं दृष्ट्वा चकितः विनोदः सन्यासिनं पृष्टवान्– "किम् एतत् विचित्रम्?" इति।

"एषः प्रदेशः स्वप्नभूमेः एकम् अङ्गम्। भूमौ जनाः यान् स्वप्नान् पश्यन्ति तेषां प्रतिबिम्बानि अत्र दृश्यन्ते। तैः दृष्टानि

"मनोजदासः"



सर्वाणि अत्र सम्मिलितानि भवन्ति। भवान् इदानीं यत् पश्यति तत् सहस्राधिकानां स्वप्नानां संक्षिप्तं रूपम्। एतादृशाः स्वप्नशीलाः प्रपञ्चं विषमयं कुर्वन्ति। धनसम्पादनार्थं वाममार्गम् अनुसरन्ति। आहारपदार्थेषु दुर्मिश्रणं कुर्वन्ति। अन्याय्यरूपेण मूल्यं वर्धयन्तः जनान् वञ्चयन्ति। तत्र पश्यतु, सः कथं सन्तोषसागरे निमग्नः अस्ति!" इति विनोदम् उक्तवान् मुनिः। विनोदः कुतूहलेन तस्यां दिशि दृष्टिं प्रसारितवान्।

सः विकृताकारः परमानन्देन धूमम् अन्तः स्वीकुर्वन् वराहः इव घीड्कुर्वन् आसीत्। यथा

यथा सः धूमम् अन्तः स्वीकरोति तथा तथा तदीयम् उदरं तुन्दिलत्वं प्राप्नोति। तथापि सः धूमस्वीकारं न त्यजति। क्रमशः तस्य मुखे आनन्दस्य स्थाने असह्या पीडा दृष्टा।

"सः काम् अपि वेदनाम् अनुभवति इव! किमर्थं तत्?" इति मुनिं पृष्टवान् विनोदः।

"सः असह्यां पीडाम् अनुभवन् अस्ति इति तु सत्यम् एव। अन्यस्य हितम् अनिच्छन्तः आत्मनः सन्तोषार्थं ये उद्युक्ताः भवन्ति ते अन्ते एतादृशीम् एव पीडाम् अनुभवन्ति। तादृशाः शुद्धेन वायुना श्वासोच्छ्वासं कर्तुं न अर्हन्ति" इति उक्तवान् मुनिः।

अल्पे एव काले सः विकृताकारः तत्रैव पतित्वा लुण्ठनम् आरब्धावान्। तत् दृश्यं द्रष्टुम् अशक्तः विनोदः दृष्टिं परिवर्तितवान्।

इदानीं विनोदस्य दृष्टिः खातस्य अन्यस्मिन् पार्श्वे पतिता अस्ति। तत्र भूमितः चित्रविचित्राः कान्तिरेखाः बाणाः इव उद्गच्छन्त्यः सन्ति। तत्र कश्चन वटवृक्षः अपि आसीत्। काश्चन कान्तिरेखाः वटवृक्षस्य मध्यभागपर्यन्तं गत्वा कान्तिहीनाः जाताः आसन्। एका कान्तिरेखा केवलं वटवृक्षस्य अन्तभागपर्यन्तं गता दृश्यते स्म। ताम् अपि कान्तिरेखाम् अग्रे गन्तुम् अत्यजन्तः गृध्राः स्वपक्षैः पुनः पुनः तां ताडयन्तः दृश्यन्ते स्म।

"ये जनानां शान्तिं सुखं च इच्छन्ति तादृशानां जनानां स्वप्नानां सङ्केतकानि

एतानि। येषां स्वप्नेषु सामर्थ्यं न भवति तादृशानां स्वप्नाः शक्तिह्रासात् मध्ये एव विलुप्ताः भवन्ति" इति विनोदं सूचितवान् मुनिः।

"तासां कान्तिरेखाणां गतिम् निरोधयन्तः पक्षिणः ते के?" इति कुतूहलेन पृष्टवन् विनोदः।

"जनानां शान्तिं सुखं च दृष्ट्वा ये असूयाम् अनुभवन्ति तादृशान् दुष्टान् सङ्केतयन्ति एते गृध्राः। तान् अतिक्रम्य गन्तव्यं चेत् धैर्यं साहसं च आवश्यकं भवति" इति उक्तवान् मुनिः।

अनन्तरं क्षणकालं मौनं स्थित्वा मुनिः विनोदम् पृष्टवान् – "विनोद! इतः परम् आवाभ्यां तृप्तिपूर्णा शान्तिभूमिः प्रवेष्टव्या अस्ति। तदर्थम् एषः खातः एकेनैव उत्प्लवनेन अतिक्रमणीयः। किं भवान् तथा कर्तुं शक्नोति?" इति।

"भवतः अनुग्रहः यावत् भवति तावत् सर्वम् अपि शक्यते एव इति मम विश्वासः" इति उक्तवान् विनोदः।

"युक्तम् एतत्। एतादृशी श्रद्धा एव बहुत्र बहूनि कार्याणि साधयति। इदानीम् एवम् आगत्य मम हस्तं गृहीत्वा नेत्रे निमील्य समग्रां शक्तिम् एकत्रीकृत्य मया सहैव उत्प्लवनं करोतु। भीतिः कापि मास्तु" इति उक्त्वा विनोदस्य हस्तं स्वहस्तेन दृढं गृहीतवान् मुनिः।

मुनिना यथा सूचितं तथा शक्तिम् एकत्रीकृत्य उत्प्लवनं कृतवान् विनोदः।





वायुना नीयमानः वृष्टिबिन्दुः इव सः खातस्य अपरं तीरं प्राप्तवान्।

तत्र दिगन्तपर्यन्तम् अपि रमणीयम् उद्यानं दृश्यते स्म। दूरे विविधवर्णैः युतम् इन्द्रधनुः अपि दृश्यते स्म। पक्षिणां मधुरः कलरवः अपि आसीत्। मेघाः तु पुष्पाणि इव सर्वत्र सञ्चरन्तः दृश्यन्ते स्म। मन्दं मन्दं चलन् मारुतः नवोत्साहजनकः सन्तोषदायकः च आसीत्।

एतत् अपूर्वं दृश्यं पश्यन् विनोदः मुनेः दर्शनार्थं दृष्टिम् इतस्ततः प्रसारितवान्। तत्र कुत्रापि मुनिः तेन न दृष्टः। मुनेः अदर्शनात् सामान्यतः चिन्ता भवेत् खलु? किन्तु तादृशी काऽपि चिन्ता विनोदस्य न जाता। 'एषः प्रदेशः प्रायः चिन्ताम् अतिक्रम्य स्थितः स्यात्' इति आलोचितवान् सः। एतेन प्रशान्तेन मनोहरेण च वातावरणेन सः व्यामुग्धः जातः।

वातावरणस्य सौन्दर्यातिशयेन प्रेरितः सः बाल्ये अभ्यस्तं गीतं मधुरेण स्वरेण गीतवान्। किञ्चित्कालानन्तरं सूर्योदयः जातः। विनोदः रागालापनं कुर्वन् पार्श्वे दृष्टवान्। काचित् अपूर्वा सुन्दरी तस्य पार्श्वे उपविष्टवती आसीत्।

विनोदः गानं स्थगयन् आश्चर्येण तां सुन्दरीं दृष्टवान्।

"कृपया गानं मा स्थगयतु। गानम् अनुवर्तताम्" इति सा युवती मधुरेण स्वरेण प्रार्थितवती।

विनोदः तु तां तदेकदृष्ट्या पश्यन् इहप्रपञ्चम् आत्मानं च विस्मृत्य किञ्चित्कालं स्थितवान्।

"किम् एतत् अकल्पितं विचित्रम्!" इति विनोदः आत्मनि एव महत् उद्गारं प्रकटितवान्।

"किं विचित्रं दृष्टं भवता?" इति पृष्टवती सा युवतिः।

"भवतीं तु अहम् ऐदम्प्राथम्येन पश्यन् अस्मि। तथापि भवती परिचिता इव भासते। तत् कथम् इति मम प्रश्नः। भवती इतः पूर्वं कदाचित् सुवर्णखनीराज्यम् आगतवती वा?" इति पृष्टवान् विनोदः।



उद्भूतः इव तत्र आगत्य वृक्षस्य शाखायाम् उपविश्य मधुरेण स्वरेण 'सुदूरे नद्याः तीरे काचित् युवराज्ञी' इति वदति स्म। तदा मम नेत्रयोः पुरतः मन्दहास प्रकटयन्त्याः कस्याचित् युवत्याः हासविलासाः दृश्यन्ते स्म। तथा दृष्टायाः युवत्याः, भवत्याः च मुखे विशेषसाम्यं दृश्यते'' इति उक्तवान् विनोदः।

''एवं वा? एकं तु सत्यं यत् अहम् एतस्य प्रदेशस्य युवराज्ञी एव। अहं निद्रायां तदा तदा कञ्चन गीतालापं शृणोमि स्म। तच्च गीतं भवता इदानीं गीतं गीतम् इव एव आसीत्। तथा गातुं मया बहुधा प्रयत्नाः कृताः। किन्तु कदापि न शक्तम्। ज्येष्ठाः वदन्ति यत् एतस्याः भूमेः अनन्तरं काचित् देवता अस्ति, तस्याः देवतायाः अनुग्रहः प्राप्तः चेत् एव तथा गातुं शक्यते इति। किन्तु अत्रत्यः कोऽपि तस्याः देवतायाः दर्शनार्थं प्रयत्नं न करोति'' इति चिन्तापूर्णेन स्वरेण उक्तवती सा सुन्दरी।

तदा सा युवतिः किलकिलेति हसन्ती– ''मया कुत्रापि न गतम्। तादृशी आवश्यकता अपि न आगता, येन अहम् एतं प्रदेशं त्यजेयम्। किम् एषः प्रदेशः भवते न अरोचत?'' इति पृष्टवती।

''किं पृच्छति – अरोचत वा इति? कुतो वा न रोचेत? एतादृशः सुन्दरः प्रदेशः मया इतःपूर्वं न दृष्टः, न ऊहितः वा। अहो अपूर्वं सौन्दर्यम्! एतत्सर्वं पश्यन् अहम् एकं विषयं स्मरामि। अहं यदा राजधान्याम् आसं तदा यदाकदाचित् राजधानीं विहाय अरण्यं गत्वा वृक्षाणां गुल्मानां च मध्ये सञ्चरन् शिथिले प्रदेशे अपि सञ्चरन् कालं यापयामि स्म। तदा अहं समग्रं प्रपञ्चम् एव विस्मरामि स्म। तत्समये कश्चन पक्षी अकस्मात् मेघेभ्यः

''अहं तु कदाचित् एवम् एव गीतं गायन् तिष्ठामि वस्तुतः मम गीते किमपि वैशिष्ट्यं नास्ति। यतः मया सङ्गीतशास्त्राभ्यासः न कृतः,न वा स्वरसिद्धिः प्राप्ता'' इति उक्तवान् विनोदः।

''भवता तत्र वैशिष्ट्यं न दृष्टं स्यात्। वस्तुतः तु एतादृशं गीतं जन्मनि एकवारं वा श्रुतं चेत् जन्मनः सार्थक्यं सिध्यति इति

भावयामि अहम्" इति उक्तवती युवराज्ञी।

"भवत्याः कण्ठस्वरः तु अतीव मधुरः अस्ति। तथापि भवती किमर्थं गातुं न शक्नोति?" इति आश्चर्येण पृष्टवान् विनोदः।

"न केवलम् अहम्, अत्रत्यः कोऽपि गातुं न शक्नोति। तादृशं भाग्यम् अस्माकं नास्ति। किन्तु अहम् इव अन्या कापि एतल्लोकस्था गानम् एव इच्छति। तादृशी आशा एव नास्ति कस्याश्चित् अपि" इति विनोदम् उक्तवती युवराज्ञी।

विनोदः एतत् श्रुत्वा पुनरपि आश्चर्यम् अनुभवन् शिलायाः उपरि उपविष्टवान्। 'एषा तु साक्षात् मूर्तिमती सङ्गीताधीश्वरी इव अस्ति। किन्तु गातुं न शक्नोति! अहो विधिविलसितम्! कः शापः एतां बाधेत?'

अत्रत्याः जनाः मानवाः इव न सन्ति इति मुनिना यत् उक्तं तत् स्मृतवान् विनोदः। 'मानवस्य इव अन्यस्य कस्यचित् अपि प्राणिनः वचनशक्तिः न भवति। एतादृशीं विशिष्टाम् अपूर्वां शक्तिं प्राप्य अपि मानवाः अन्यथा व्यवहरन्ति। तस्याः शक्तेः सदुपयोगं स्वीकर्तुं न शक्नुवन्ति तेषु केचन । बहवः तस्याः शक्तेः वैशिष्ट्यम् एव न जानन्ति। अन्ये केचन जानन्तः अपि ताम् उपेक्षन्ते' इति मुनिना यत् उक्तं तदपि स्मृतवान् विनोदः।

'वस्तुतः तु मानवाः सर्वेषां प्राणिनाम् अपि अपेक्षया भाग्यशालिनः। ते सन्तोषेण हसितुं



शक्नुवन्ति। सुमधुरं गातुम् अपि शक्नुवन्ति। वचनशक्त्या अपूर्वाणि कार्याणि कर्तुम् अपि शक्नुवन्ति। तथापि ते अज्ञानवशात् तादृशानां सामर्थ्यानाम् उपयोगं व्यवस्थितरूपेण प्राप्तुं न शक्नुवन्ति। मुनिना यत् उक्तं तत् सर्वथा सत्यम्' इति आलोचितवान् विनोदः।

"युवराज्ञि! भवती यां देवतां सूचितवती तस्याः दर्शनार्थम् एव अहम् अत्र आगतवान्। किन्तु सा देवता कुत्र निवसति, तस्याः निवासस्थानं प्रति कथं गन्तव्यम् इत्यादिकम् अहं न जानामि। तत्सर्वं भवती यदि ज्ञापयेत् तर्हि अहं भवत्याः निमित्तं गानशक्तिम आनयेयम्। भवत्याः कोमलात् कण्ठात सुमधुरं गीतं श्रोतव्यम् इति ममापि महती

इच्छा अस्ति'' इति उत्साहेन उक्तवान् विनोदः।

''तच्च एकं रहस्यम्। तथापि भवन्निमित्तम् अहं तत् उद्घाट्य वदामि। एतस्य नीलपर्वतस्य शिखरे एकः विशिष्टः वृक्षः अस्ति। स च वृक्षः वर्षे एकवारम् एव एकम् अपूर्वं फलं फलति। तस्य नाम नक्षत्रफलम् इति। तत् फलं ये खादन्ति ते एतां भूमिम् अतिक्रम्य तस्याः देवतायाः समीपं सुलभतया गन्तुं शक्नुवन्ति'' इति उक्तवती युवराज्ञी।

''एवं तर्हि भवत्सु कोऽपि तत् फलम् आनीय कुतो वा न खादितवान्?'' इति पृष्टवान् विनोदः।

एतत् श्रुत्वा सशब्दं हसन्ती युवराज्ञी उक्तवती– ''भवन्तः मानवाः यथा आहारसेवनं कुर्वन्ति तथा अत्रत्याः वयम् आहारसेवनं न कुर्मः'' इति।

''भवत्याः एकैकं वचनम् अपि विचित्रम् अस्ति। यदि आहारसेवनं न स्यात् तर्हि शक्तिः कुतः? कथं भवन्तः वर्धन्ते?'' इति पृष्टवान् विनोदः।

''तत्र किम्? यथा पुष्पाणि विकसन्ति वर्धन्ते च तथैव वयम् अपि वर्धामहे। सूर्यकिरणेभ्यः वयं सहजतया अपेक्षितां शक्तिं प्राप्नुमः। अतः एव अस्माकं बुभुक्षा पिपासा वा नास्ति। तदस्तु, इदानीं भवतः पिपासा बुभुक्षा वा अस्ति वा?'' इति पृष्टवती युवराज्ञी।

''बुभुक्षा नास्ति एव। यदि बुभुक्षा भवेत् तर्हि खादितुं नक्षत्रफलानि सन्ति खलु?'' इति उक्तवान् विनोदः।

''तथा कर्तुं न शक्यते। यतः अत्र यत् कार्यं न अनिवार्यं तादृशं कार्यं कर्तुं कोऽपि न शक्नोति। अतः तत् फलं खादितुम् अपि न शक्यते'' इति उक्तवती युवराज्ञी।

तत्समये कुतश्चित् कश्चन हरिणः धावन् आगतवान्। तं दृष्टवत्याः युवराज्ञ्याः मुखं विकसितम् अभवत्।

(अनुवर्तते)






# मारकायुधम्

आदिनं विश्रान्तिं स्वीकृत्य त्रिविक्रमः रात्रिसमये नवोत्साहं प्राप्य पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। पुनः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन्! देशस्य परिपालकः सन् अपि भवान् क्षुद्रशक्तिं वशीकर्तुं प्रयतमानः कापालिकः इव घोरे अस्मिन् मध्यरात्रे उद्युक्तः अस्ति खलु? एतत् तु सर्वथा आश्चर्यकरम्। असाध्ये कार्ये प्रवृत्तस्य भवतः विषये करुणा अपि जायते। विवेकी कोऽपि कार्यस्य असाध्यतां जानन् अपि एतावन्तं परिश्रमं न करोति। तीरस्थां सुलभलभ्यां नौकां विहाय बाहुभ्यां नदीतरणार्थं प्रयत्नः अविवेकं खलु द्योतयति? नागेन्द्रवर्मा नाम कश्चित् महाराजः एवम् एव आचरितवान्। कः सः, किं कृतवान्, इति कुतूहलं भवतः स्यात् एव। तर्हि कथां

## वेतालकथा



श्रावयामि। श्रद्धया शृणोतु तावत्। कथां शृण्वतः गच्छतः भवतः मार्गायासः अपि परिहृतः भवेत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं नागेन्द्रवर्मा नाम राजा मलयदेशं परिपालयन् आसीत्। तस्य शासनसन्दर्भे कदाचित् देशे अराजकता नितरां प्रवृद्धा। सर्वत्रापि लुण्ठनं, दिने एव मारणं, महाचौर्यम्, अग्निना दाहः, विवादाः इत्यादयः दिने दिने प्रवृद्धाः।

'सिन्धुदेशस्य गूढचराः राजद्रोहिणः उत्तेजयन्तः एतादृशं घोरं कृत्यं कारयन्तः सन्ति' इति वार्ता नागेन्द्रवर्मणा ज्ञाता।

'एतस्याः परिस्थितेः निग्रहणं कथम्?' इति एकदा मन्त्रिणा सह समालोचनं कुर्वन् आसीत् राजा। तत्समये कश्चन भटः आगत्य विनयेन नमस्कृत्य – ''विदेशीयः वणिक् कश्चित् भवतः दर्शनम् इच्छन् द्वारे तिष्ठति'' इति निवेदितवान्। 'तम् अन्तः प्रवेशयतु'' इति भटं सूचितवान् राजा।

विदेशीयः वणिक् अन्तः आगत्य राजानं नमस्कृत्य– ''महाराज! अहं काम्भोज-देशीयः वणिक्। वाणिज्यनिमित्तम् अहं केभ्यश्चित् दिनेभ्यः पूर्वम् अत्र आगतवान्। देशे शान्तिस्थापनार्थं भवता क्रियमाणाः प्रयत्नाः अपि मया ज्ञाताः। दुष्टानां निग्रहणार्थम् उपयोक्तुम् अर्हम् एकं आयुधं भवते दातुम् अहम् अत्र आगतवान्'' इति उक्त्वा वितस्तिपरिमितं नलिकाकारकम् एकम् आयुधं महाराजस्य पुरतः स्थापितवान्। वस्तुतः तत् आयुधम् इव न दृश्यते स्म।

तत् सम्यक् परीक्ष्य वणिजं पृष्टवान् राजा– ''एतस्य किं वैशिष्ट्यम्?'' इति।

तदा वणिक् उक्तवान् –''प्रभो! एतस्य अधोभागे किञ्चन कीलकम् अस्ति। अङ्गुष्ठेन तस्य नोदनं कुर्मः चेत् सूचीसदृशी काचित् तीक्ष्णा अयःशलाका ततः शरवेगेन निर्गच्छति। यं लक्ष्यीकृत्य वयम् एतस्य अस्त्रस्य प्रयोगं कुर्मः, सः पशुः मानवः वा भवतु, क्षणमात्रेण तं मारयिष्यति'' इति।

तत् दृष्ट्वा आश्चर्यचकितः राजा किमपि

वक्तुम् उद्युक्तः। तावता मन्त्री उक्तवान्– "प्रभो! एतस्य मारकसाधनस्य परीक्षां विना एतद्विषये कोऽपि निर्णयः अनुचितः भवेत्। अतः एषः वणिक् द्वित्रदिनानाम् अनन्तरम् आगच्छतु नाम। तदा वयम् अस्माकम् अभिप्रायं श्रावयेम" इति।

सः वणिक् एतं प्रस्तावम् अङ्गीकृत्य तत् मारकायुधं तत्रैव स्थापयित्वा निर्गतवान्।

तद्दिने रात्रौ यदा नागेन्द्रवर्मा अन्तःपुरे गाढनिद्रायां मग्नः आसीत् तदा कश्चन सूक्ष्मः शब्दः श्रुतः। एतेन महाराजः जागरितः सन् उत्थितवान्।

पुनः अपि क्षणकालं शब्दं जागरूकतया श्रुत्वा राजा– "कः सः?" इति उच्चैः पृष्टवान्।

तदा उभौ मुखादिकं वस्त्रेण आच्छाद्य हस्तेन खड्गम् उन्नीय महाराजसमीपम् आगतवन्तौ।

राजा तत्क्षणे स्वशिरसः पार्श्वे स्थापितं तत् मारकायुधं स्मृतवान्। सः झटिति तत् आयुधं स्वीकृत्य वस्त्रेण आवृतौ तौ लक्ष्यीकृत्य प्रयुक्तवान्।

अनन्तरं तौ कर्कशेन स्वरेण आक्रोशनं कुर्वन्तौ तत्रैव पतितवन्तौ।

एतम् आक्रोशनशब्दं श्रुत्वा भटाः परिचारकाः च धावन्तः तत्र आगतवन्तः। मरणं प्राप्तवतोः तयोः अवगुण्ठनवतोः परीक्षणं यदा कृतं तदा ज्ञातं यत् तयोः एकः



राज्ञः अङ्गरक्षकः एव इति।

राजा तस्य मारकायुधस्य अगाधं सामर्थ्यं स्मरन् किमपि आलोचयन् तत्रैव स्तब्धतया स्थितवान्।

अनन्तरदिने सः विदेशीयः वणिक् राजसभाम् आनायितः। राजा तम् उक्तवान्– "भवता यत् मारकायुधं दत्तं तस्य सामर्थ्यं तु अपूर्वम् एव। एतादृशानि आयुधानि मह्यम् इतोऽपि सहस्रसंख्यया अपेक्षितानि" इति।

तदा वणिक् सन्तोषेण– "प्रभो, मया अपेक्ष्यमाणाः सामग्रीः, स्थलं, साहाय्यकान् जनान् च भवान् यदि दद्यात् तर्हि एतादृशानि आयुधानि भवदपेक्षानुगुणं सज्जीकृत्य



दास्यामि। तदर्थं यावत् मूल्यं मया सूच्यते तावदपि दातव्यं भवता" इति उक्तवान्।

राजा एतत् अङ्गीकर्तुं सिद्धः यावत् जातः तावता मन्त्री महाराजम् उक्तवान्— "प्रभो! अहम् एतं वणिजं किञ्चित् प्रष्टुम् इच्छामि। कृपया अनुमतिः दातव्या" इति।

राजा अनुमतिपूर्वकं शिरः चालितवान्।

मन्त्री वणिजं पृष्टवान्— "भवतः देशे एतादृशं मारकायुधं सज्जीकर्तुं समर्थाः कति सन्ति?" इति।

"मादृशाः केचन सन्ति तत्र। किन्तु किं प्रयोजनम्? अस्माकं राजा एतादृशानाम् अस्त्राणां निर्माणं निषिद्धवान् अस्ति" इति उत्तरं दत्तवान् सः वणिक्।

"एवं तर्हि भवतः राज्ञः शत्रुभ्यः भीतिः किञ्चिदपि नास्ति वा?" इति पुनः पृष्टवान् मन्त्री।

"शत्रुभ्यः भीतिः कुतो न भवेत्? किन्तु अस्माकं राजा शत्रुनिग्रहणविषये एतस्य आयुधस्य उपयोगं स्वीकर्तुं न इच्छति" इति उक्तवान् वणिक्।

"भवतः देशे अराजकता किम् अस्ति?" इति पुनरपि पृष्टवान् मन्त्री।

"भवतः राज्ये यथा अस्ति तावता प्रमाणेन नास्ति इति तु सत्यम् एव। तथापि अराजकता नास्ति इति न" इति उक्तवान् वणिक्।

तदा मन्त्री राजानम् उक्तवान्— "प्रभो! सर्वं श्रुतं खलु? काम्भोजराजः एतानि मारकायुधानि निषिद्धवान् अस्ति। यानि तेन निषिद्धानि तानि अस्मद्राज्ये सज्जीकृत्य धनं सम्पादयितुम् इच्छति एषः। अतः एतद्विषये सगम्भीरं चिन्तनीयं भवता" इति।

मन्त्रिणः वचनानां श्रवणस्य अनन्तरं नागेन्द्रवर्मा क्षणकालं मौनं स्थित्वा आलोच्य स्वहस्ते स्थितं मारकायुधं बलात् भञ्जयित्वा दूरे क्षिप्त्वा मन्त्रिणम् उक्तवान्— "एतस्मै वणिजे सहस्रं सुवर्णनाणकानि उपायनरूपेण ददातु। अनन्तरं भटान् सूचयतु यत् एतं अस्मद्देशस्य सीमापर्यन्तं प्रापय्य आगन्तव्यम् इति" इति।

मन्त्री तथैव कृतवान्। सप्ताहाभ्यन्तरे राजा देशस्थाम् अराजकतां निर्मूलयितुं

शत्रुगूढचराणां दुराचारस्य निर्मूलनार्थं च स्वयम् उद्युक्तः जातः।

प्रजाः ऐकमत्यं देशभक्तिं च बोधयन्, तादृशानां गुणानाम् उद्बोधनार्थं कार्यक्रमान् आयोजयन् देशे सर्वत्र सञ्चारं कुर्वन् देशे शान्तिं स्थिरतां च पुनः स्थापयित्वा धन्यतां प्राप्तवान् नागेन्द्रवर्मा।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! मम कश्चन सन्देहः अत्र। तस्य विदेशीयवणिजः द्वारा मारकायुधानि निर्माय नागेन्दवर्मा सैनिकेभ्यः यदि दद्यात् तर्हि शत्रुनिर्मूलनं सुकरम् अभविष्यत् खलु? एवम् एव सामान्येभ्यः दत्तं चेत् तेषाम् आत्मरक्षणं अपि सुकरम् अभविष्यत्। एतादृशं सुलभतरं मार्गं त्यक्त्वा सः किमर्थं कष्टकरं देशपर्यटन-प्रबोधनादिकं स्वयं कृतवान्? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् इति।

तदा त्रिविक्रमः उक्तवान्– "मारकायुधस्य निर्माणं तिरस्कुर्वन् राजा नागेन्द्रवर्मा राजकीयचातुर्यं, व्यवहार-परिज्ञानं च प्रदर्शितवान्। मन्त्रिणः वणिजः च मध्ये यत् प्रश्नोत्तरं प्रवृत्तं तत् श्रुतवतः महाराजस्य चिन्तने महत्परिवर्तनं जातम्। 'शत्रुभयहीनं राज्यं प्रपञ्चे एव नास्ति। सर्वथा समस्यायाः अभावे जनाः अलसाः भवन्ति' इति अंशद्वयं तयोः वार्तालापात् ज्ञातम्। सर्वेषां हस्ते यदि मारकायुधानि भवेयुः तर्हि ते लघुषु अपि विवादेषु तेषां प्रयोगं कुर्युः। तदा नूतनाः विपत्तयः उत्पन्नाः भवेयुः। एवम् एतत् अनर्थस्य मूलकारणं भवेत्। एतत् सर्वं जानन् एव नागेन्द्रवर्मा सुलभम् अपि एतं मार्गं परित्यज्य श्रमेण ऐकमत्यस्य देशभक्तेः च जागरणार्थम् उद्युक्तः सन् सफलः जातः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






# जीवनसारः

धर्मपुरीग्रामे पूर्वं सोमसुन्दरः नाम गृहस्थः आसीत्। धर्मपुरे तस्य कश्चन आपणः अस्ति। सः अधिकं लाभम् अनिच्छन् न्याययुतेन मार्गेण वाणिज्यं करोति। सः दैवभीरुः अपि। निर्धनानां विषये विशेषतः करुणा आसीत् तस्य।

सौभाग्यं नाम तदीया पत्नी पार्वती सर्वेषु अपि अंशेषु अनुकूला एव आसीत्।

एकदा मध्याहनसमये सोमसुन्दरस्य गृहस्य पुरतः कृपानन्दः नाम संन्यासी स्थित्वा– "अहम् अतीव बुभुक्षितः अस्मि। यदि भवतः क्लेशः न स्यात् तर्हि भवान् मम आतिथ्यं कर्तुम् अर्हति" इति उक्तवान्।

संन्सासिनः मुखे दृष्टेन तेजसा सोमसुन्दरः प्रभावितः अभवत्। सः झटिति उत्थाय तम् अन्तः नीत्वा भोजनादीनां व्यवस्थापनेन सम्यक् सत्कृतवान्।

भोजनविश्रान्त्योः अनन्तरं संन्यासी सोमसुन्दरं सूचितवान्– "भोः, भवतः आतिथ्येन अहं परमसन्तुष्टः अस्मि। पूरयितुम् अशक्ता भवतः अपेक्षा कापि यदि स्यात् तर्हि वदतु। मम तपोबलेन तां पूरयितुम् अहं प्रयत्नं करोमि" इति।

सोमसुन्दरः किमपि वक्तुम् उद्युक्तः। तन्मध्ये संन्यासी पुनः उक्तवान्– "भवान सुविचिन्त्य वक्तुम् अर्हति। या प्रयत्नसाध्या, किन्तु यस्याः पूरणे भवान् अशक्तः अभवत् तादृशीम् अपेक्षां प्रकटयतु। किञ्चित्कालं चिन्तनेन तादृशी अपेक्षा का इति भवान ज्ञातुम् अर्हति" इति।

क्षणकालस्य आलोचनायाः अनन्तरं सोमसुन्दरः उक्तवान्– "श्रीमन्! बहुभ्यः वर्षेभ्यः अहं वाणिज्यं कुर्वन् अस्मि चेदपि आर्थिकदृष्ट्या विशेषप्रगतिं साधयितुं न

शक्तवान्। एतस्मात् दारिद्र्यात् कथं विमुक्तिः इत्यपि अहं न जानामि। अतः अहं दारिद्र्यात् मुक्तः यथा भवेयं तथा करोतु कृपया" इति।

"एषा एव खलु पूरयितुम् अशक्ता भवतः अपेक्षा? अस्तु तावत्। अचिरात् एव भवान् दारिद्र्यात् मुक्तः भविष्यति। अहम् इदानीं गच्छामि। दशवर्षाणाम् अनन्तरम् आगमिष्यामि च" इति उक्त्वा संन्यासी ततः गतवान्।

एतदनन्तरं सोमसुन्दरः दिने दिने आर्थिकदृष्ट्या अभिवृद्धिं प्राप्तवान्। यत्र यत्र सः प्रवर्तते तत्र सर्वत्र लाभः एव। अल्पेषु एव मासेषु सः धनिकः जातः।

क्रमशः दश वर्षाणि अतीतानि। पूर्वं यथा उक्तं तदनुगुणं संन्यासी सोमसुन्दरं द्रष्टुम् आगतवान्। सोमसुन्दरः संन्यासिनं भक्त्या सवैभवं स्वागतीकृत्य षड्सोपेतं भोजनं व्यवस्थापितवान्।

एतस्य सर्वस्य अनन्तरं संन्यासी सोमसुन्दरम् उक्तवान्– "भोः, दशवर्षाणाम् अनन्तरम् अहम् अत्र आगतवान् अस्मि। इदानीम् अपि पूरयितुम् अशक्ता काचित् समस्या अस्ति चेत् भवान् वक्तुम् अर्हति। किन्तु एकं तु स्मर्तव्यं यत् इदानीं प्रकट्यमानाम् अपेक्षां पूरयामि चेत् पूर्वं पूरितायाः अपेक्षायाः फलं निर्गतं भविष्यति। अतः विचिन्त्य वदतु" इति।

"स्वामिन्! यावद् वा ऐश्वर्यं भवतु नाम, सन्तानभाग्यं विना ततः किमपि प्रयोजनं न



भवति। अतः पूर्वतनात् भवदनुग्रहात् प्राप्तं धनं त्यक्तुम् अहं सिद्धः अस्मि। कृपया सन्तानभाग्येन माम् अनुगृहणातु" इति प्रार्थितवान् सोमसुन्दरः।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान्– "बहुभ्यः वर्षेभ्यः वाणिज्यं कुर्वन् भवान् यथेष्टम् अनुभवं सम्पादितवान् अस्ति। अतः अनुभवबलात् प्राप्तैः वाणिज्यतन्त्रैः धनं तु पुनः सम्पादयितुं शक्नोति एव। अनाथं कञ्चित् पुत्रं दत्तकरूपेण स्वीकृत्य पोषयति चेत् सन्तानं नास्ति इति खेदः अपि अपगच्छति। एतत् अंशद्वयम् अपि मनसि कृत्य किमपि अन्यत् प्रार्थयतु" इति।

सोमसुन्दरः क्षणकालस्य मौनानन्तरं संन्यासिनं उक्तवान्– "श्रीमन्! कीदृशी अपेक्षा प्रकटिता चेत् मम हितं सिध्येत् इति भवान् एव सूचयतु कृपया" इति।

"जीवने तृप्तिः खलु प्रधाना? यस्याः प्राप्त्या जीवने तृप्तिः लभ्येत तादृशीम् अपेक्षां प्रकटयतु तावत्" इति उक्तवान् संन्यासी।

संन्यासिनः वचनस्य श्रवणात् सोमसुन्दरस्य मनसि विचारमथनम् आरब्धम्– 'एका अपेक्षा पूरिता चेत् अपरा अपेक्षा उत्पन्ना भवति एव। एवम् अपेक्षायाः पूरणस्य समाप्तिः एव न भवति। ततः तृप्तिः अपि न लभ्यते।'

एतत् सत्यदर्शनं प्राप्य सोमसुन्दरः संन्यासिनं साष्टाङ्गं नमस्कृत्य उक्तवान्– "जीवने अहं तृप्तः यथा स्यां तथा अनुगृहणातु। तदेव जीवने सारभूतम्। तृप्तिः यदि स्यात् अन्या अपेक्षा न उद्भवति एव। तृप्तिः यदि न स्यात् तर्हि अपेक्षाणां पूरणेन अपि प्रयोजनं न भवति" इति।

संन्यासी मन्दहासपूर्वकं– "जीवनसारः भवता गृहीतः। इतः परं भवतः जीवने असन्तृप्तिः न भविष्यति। तृप्त्या जीविष्यति भवान्" इति आशिषा अनुगृह्य ततः गतवान्। संन्सासिनः गमनं शान्तेन मनसा पश्यति सोमसुन्दरः। तस्य अन्तरङ्गम् इदानीं सर्वथा तृप्तम् अस्ति।





काव्यकथा

# राक्षसमुद्रिका-४

चाणक्यस्य साहाय्येन चन्द्रगुप्तः नन्दान् नाशितवान्। नन्दानां मन्त्रिणं राक्षसं चन्द्रगुप्तपक्षे योजयितुं चाणक्यः उपायं कृतवान्। स्वस्य चन्द्रगुप्तस्य च मध्ये मतिभेदः उत्पन्नः इति जनाः यथा भावयेयुः तथा कृत्वा चाणक्यः चन्द्रगुप्तस्य आस्थानं परित्यज्य गतवान्।

चाणक्यचन्द्रगुप्तयोः मध्ये कलहः प्रवृत्तः इति वार्ता मलयकेतुना ज्ञाता। 'पाटलीपुत्रं वशीकर्तुम् एषः एव समयः एतादृशः अवकाशः पुनः न लभ्येत' इति आलोच्य मलयकेतुः राक्षसः च युद्धसन्नाहम् आरब्धवन्तौ।







तत्समये चाणक्यः एकं मिथ्यापत्रं सृष्टवान्। यच्च पत्रं राक्षसनाम्ना चन्द्रगुप्ताय लिखितम् आसीत्, यत्र च सूचितम् आसीत् यत् मलयकेतोः समापनार्थम् एषः युक्तः समयः इति।



राक्षसेन उपयुज्यमानां मुद्रिकां चाणक्यः कथञ्चित् सम्पाद्य पूर्वोक्ते मिथ्यापत्रे राक्षसमुद्राम् अङ्कयित्वा स्वगुप्तचर-द्वारा मलयकेतुं प्रति प्रेषितवान्।

एषः सैनिकः पाटलीपुत्रस्य समीपे निवसतः मलयकेतोः शिबिरस्य समीपे संशयास्पदरूपेण उद्देशपूर्वकं गच्छन् आसीत्। तदा मलयकेतोः सैनिकाः तं बद्धवन्तः।





एषा वार्ता मलयकेतुना ज्ञाता। दूतस्य हस्ते स्थितं पत्रं दृष्ट्वा सः चकितः अभवत्। एतत् पत्रं राक्षसविषये अविश्वासम् अजनयत्। 'राक्षसः विश्वासघातकः' इति भावितवान् मलयकेतुः। मलयकेतुना पृष्टः दूतः उक्तवान् यत् एतस्मिन् राक्षसतन्त्रे मलयकेतोः आप्ताः केचन राजानः अपि भागग्राहिणः सन्ति इति।

मलयकेतुः तत्क्षणे राक्षसं स्वसमीपम् आहूय 'भवता विश्वासद्रोहः आचरितः' इति वदन् पत्रं प्रदर्शितवान्। "एतस्य पत्रस्य विषये वस्तुतः अहं किमपि न जानामि एव" इति उक्तवान् राक्षसः। पत्रे राक्षसस्य मुद्रा अपि आसीत् इत्यतः राक्षसस्य वादं तिरस्कृतवान् मलयकेतुः। विरक्तः राक्षसः शिरः अवनमय्य ततः निर्गतवान्।





पत्रस्य परिणामतः मलयकेतुः संशयास्पदान् आप्तान् सर्वान् अविचार्य मारितवान्। एतत् दृष्ट्वा कुपिताः भीताः च इतरे मलयकेतुम् आक्रम्य बन्धने स्थापितवन्तः।

विरक्तः राक्षसः पाटलीपुत्रं प्रति प्रस्थितवान्। यदा पाटलीपुत्रं प्रविष्टं तदा तेन ज्ञातं यत् पत्नीपुत्राणाम् आश्रयदाता चन्दनदासः राजभृत्यैः बद्ध्वा दूरं नीयमानः अस्ति इति।





राक्षसः धावन् भटानां समीपं गत्वा– "तं किमर्थं बद्ध्वा नयन्ति?" इति पृष्टवान्। "अस्माकं राज्ञः शत्रोः अमात्यराक्षसस्य कुटुम्बाय आश्रयः एतेन दत्तः। एतस्य राजद्रोहस्य निमित्तं तस्य मरणदंण्डनं विहितम्। इदानीं मरणदण्डनार्थं त वधस्थानं नयन्तः स्मः" इति उक्तवन्त भटाः।

"अहम् एव अमात्यराक्षसः अस्मि। मत्कुटुम्बाय आश्रयं दत्तवन्तम् एतं दयासागरं उन्मुच्य मां शूलम् आरोपयन्तु" इति उक्तवान् राक्षसः। तत्समये सपरिवारं तत्र आगतः चाणक्यः– "राक्षसार्य! यदि भवान् चन्द्रगुप्तस्य मन्त्रित्वम् अङ्गीकुर्यात् तर्हि भवतः मित्रं चन्दनदासः दण्डनात् मुक्तः भविष्यति" इति उक्तवान्।





अनन्यगत्या राक्षसः चन्द्रगुप्तस्य मन्त्रिपदवीम् अङ्गीकृतवान्। तदा चाणक्यः रहस्योद्भेदनं कृतवान् यत् भवन्तं चन्द्रगुप्तपक्षे योजयितुम् एव भवन्नाम्ना मलयकेतवे मया एव पत्रं लिखितम् इति, चन्दनदासस्य मरणदण्डनाभिनयः कारितः इति च। एवं चाणक्यस्य साहाय्यतः चन्द्रगुप्तः मगधसिंहासनम्, अपूर्वमेधाविनम् अमात्यराक्षसं च वशीकृतवान्।

–(समाप्तम)



# ऊहाकुशलः

देवगिरिनामके ग्रामे रामदेवो नाम कश्चन कृषकः आसीत्। तस्य द्वौ पुत्रौ। ज्येष्ठस्य नाम देवराजः। अपरस्य नाम जयदेवः।

देवराजः यदा प्राप्तवयस्कः जातः तदा कृषिकार्येषु आसक्तिं प्रदर्शयन् पितुः साहाय्यम् आरब्धवान्।

द्वितीयः जयदेवः तु विद्याभिलाषया गृहं परित्यज्य योग्यं गुरुम् अन्विष्यन देशसञ्चारम् आरब्धवान्।

एवं प्रस्थितः जयदेवः योग्याहाराभावात् निद्रा-विश्रान्त्यादीनाम् अभावात् च कष्टेन प्रयाणं कुर्वन् एकं ग्रामं प्राप्तवान्। ततः अग्रे गन्तुम् अशक्तः सः हरिशर्मनामकस्य गृहस्य पुरतः मूर्च्छया पतितवान्।

परमदयालुः हरिशर्मा तम् उन्नीय अन्तः नीत्वा योग्येन उपचारेण तं सचेतनं कृत्वा पानार्थं जलं दत्तवान्। स्नानं भोजनं च कारयित्वा तदीयम् इतिवृत्तं पृष्टवान्। जयदेवः सर्वं निवेदितवान्।

तीव्रया विद्याभिलाषया एषः गृहादिकं परित्यज्य महता क्लेशेन एवम् आगतः इति ज्ञात्वा हरिशर्मा नितरां सन्तुष्टः। जयदेवस्य विषये करुणा ममता च उत्पन्ना।

हरिशर्मा कश्चन महापण्डितः। सः आत्मनः परिचयम् उक्त्वा जयदेवं वर्षत्रयं यावत् गृहे एव स्थापितवान्। तस्य अशनवसनादिकम् अपि निर्वहन् योग्यं विद्याभ्यासम् अपि कारितवान्।

जयदेवः तीक्ष्णमतिः। गुरुः एकवारं बोधयति चेत् पर्याप्तम्, एषः सम्यक् गृह्णाति, स्मरति च। अतः वर्षत्रयाभ्यन्तरे गुरुः यावत् जानाति तावत् पूर्णतया ज्ञातवान् जयदेवः।

वर्षत्रयानन्तरं हरिशर्मा जयदेवं– "वत्स!

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



अन्यः कश्चन गुरुः अस्ति। ततः अधीतं चेदेव भवतः विद्यायाः पूर्तिः। सः गुरुः कश्चन व्याधराजः। सः अरण्ये निवसति। सः भवन्तं मृगयां चोरविद्यां च पाठयति" इति उक्त्वा व्याधराजसमीपं गन्तुं मार्गम् अपि सूचितवान्।

जयदेवः हरिशर्मणा सूचितेन मार्गेण गत्वा व्याधराजं दृष्टवान्।

हरिशर्मणा प्रेषितम् इति ज्ञात्वैव सन्तुष्टः सः व्याधराजः जयदेवम् एकं वर्षं यावत् स्वसमीपे स्थापितवान्।

तस्मिन् अवधौ चौर्यकलां, चोरग्रहणं, मृगयाप्रकारं, मृगान्वेषणक्रमं च सम्यक् बोधितवान् सः।

एवं सर्वाः अपि विद्याः सम्पाद्य जयदेवः गृहाभिमुखं प्रस्थितवान्। एवं गमनसमये तस्य पिपासा जाता।

सः समीपस्थं ग्रामं गत्वा कस्यचित् गृहस्य पुरतः स्थित्वा जलं प्रार्थितवान्। गृहस्वामी एतम् अन्तः आहूय उपवेश्य जलादिकं दत्त्वा जयदेवस्य इतिवृत्तं पृष्ट्वा ज्ञातवान्।

जयदेवस्य विद्यासमाप्तिं ज्ञात्वा सः पृष्टवान्– "वत्स! भवतः विद्यायाः कौशलस्य परीक्षार्थम् अहम् एकं प्रश्नं पृच्छामि वा?" इति।

"अस्तु" इति अङ्गीकृतवान् जयदेवः।

"भवतः आगमनात् पूर्वम् अत्र के आगतवन्तः? के वा गृहस्य पुरतः गतवन्तः? एतदुभयं ज्ञातुं शक्नोति वा?" इति पृष्टवान् सः गृहस्थः।

जयदेवः उत्थाय बहिः गत्वा किञ्चित्कालानन्तरं प्रत्यागत्य – "मम आगमनात् पूर्वं भवतः गृहं प्रति चत्वारः सैनिकाः राजभटाः वा आगत्य पुनः अग्रे गतवन्तः। तेषाम् आगमनतः पूर्वम् अन्यः कश्चित् भवतः गृहस्य पुरतः गतवान्। तस्य शिरसि अङ्गारगोणी आसीत्। तेन प्रायः किमपि चोरितं स्यादिति भाति" इति गृहस्य यजमानम् उक्तवान्।

एतत् श्रुत्वा गृहस्य यजमानः आश्चर्यचकितः। "भवता उक्तं सत्यम् एव। मम गृहं प्रति चत्वारः राजभटाः आगताः

आसन्। अद्य देवालयस्य पुरतः कुत्रचित् महाराज्ञ्याः एकम् आभरणं पतितम्। यावत् पतनं ज्ञात्वा अन्वेषणम् आरब्धं ततः पूर्वम् एव केनचित् चोरितम् आसीत् तत्। अतः राजभटाः प्रतिगृहं गत्वा अन्वेषणं कृतवन्तः। तदङ्गतया एव मम गृहे अपि अन्वेषणं कृतवन्तः। किन्तु तैः आभरणं कुत्रापि न प्राप्तम्। चोरः कश्चित् मम गृहस्य पुरतः एव गतवान् इति भवान् यत् वदति तत् तु आश्चर्यकरम् एव। सः चोरः कुत्र अस्ति इति जानातु। तत् भवता ज्ञातं चेत् भवतः सौभाग्यं फलितम् इत्येव। महाराजः विशेषपुरस्कारेण भवन्तं सम्मानयिष्यति। अधीतायाः विद्यायाः प्रथमोपयोगः अत्रैव भवतु नाम" इति उक्तवान् सः गृहस्वामी।

'पुनः आगमिष्यामि' इति गृहस्वामिनम् उक्त्वा जयदेवः चोरस्य गमनचिह्नम् अनुसरन् एकं गृहं प्राप्तवान्।

तच्च स्वर्णकारस्य गृहम्। जयदेवः अन्तः गत्वा स्वर्णकारं दृष्ट्वा सुवर्णस्य मूल्यादिकं पृष्ट्वा, तेन निर्मीयमाणस्य नूतनाभरणस्य विषये किञ्चित् वार्तालापं कृत्वा ततः प्रत्यागतवान्।

पूर्वं सत्कृतवतः गृहस्थस्य समीपं गत्वा तम् उक्तवान् – "अहं चोरं सूचयिष्यामि। राजभटान् आनाययतु" इति। सः गृहस्थः राजभटानाम् आनयनार्थं व्यवस्थां कृत्वा जयदेवं कुतूहलेन पृष्टवान् – "भोः, एतत्



एतावच्छीघ्रं कथं ज्ञातुं शक्तवान् भवान्?" इति।

"अत्र सर्वत्र अनुमानम् उपकारकं भवति। सैनिकाः भटाः वा यदा चलन्ति तदा तेषां पदानि सर्वदा समानान्तरेण स्थापितानि भवन्ति। अन्यच्च ते पदद्वयम् अपि दृढं भूमौ स्थापयन्ति। अतः भवतः गृहस्य पुरतः स्थितानि पदचिह्नानि दृष्ट्वा आगताः सैनिकाः भटाः वा इति, ते चत्वारः आसन् इति च ज्ञातवान्। पदचिह्नबलात् एवं तेषां निर्गमनम् अपि तर्कितं मया" इति उक्तवान् जयदेवः।

"एवं तर्हि चोरस्य रहस्यं कथम् भेदितवान् भवान्?" इति पृष्टवान् सः गृहस्वामी।

"चोरः प्रायः मार्गस्य मध्ये न सञ्चरति। सः सर्वदा अपि भीतः सन् मन्दं पदं स्थापयन् मार्गस्य पार्श्वे एव गच्छति। पदचिह्नानि दृष्ट्वा अहं चोरस्य गमनं ज्ञातवान्। चोरस्य शिरसि अङ्गारगोणी आसीत्। तत्र तत्र अङ्गारचूर्णानि पतितानि दृश्यन्ते। चोरः तदा तदा दृष्टिं परिवृत्य 'कोऽपि माम् अनुसरति वा?' इति परीक्षते। एतत्सूचकानि अर्धपरिवृतानि पादचिह्नानि मया दृष्टानि। अन्यच्च चोरस्य पादचिह्नानि भटानां पादचिह्नानि इव स्फुटानि न आसन्। अतः भटानां गमनतः पूर्वं चोरः गतवान् इति, भटाः तस्यैव चोरस्य अन्वेषणे सन्ति इति च तर्कितवान्" इति उक्तवान् जयदेवः।

एवं तयोः वार्तालापसमये राजभटाः तत्र आगतवन्तः। जयदेवः तैः सह स्वर्णकारस्य गृहं गतवान्। यद्यपि तत् गृहम् अपि राजभटैः संशोधितम् एव आसीत्, किन्तु ते पेटिकादिषु आभरणस्य अन्वेषणं कृतवन्तः आसन्। एतं विषयं जयदेवः जानाति। जयदेवः तर्कितवान् यत् चोरः चौर्यात् प्राप्तं वस्तु प्रायशः कुत्रापि भित्तिविच्छेदिकासु शिलफलकादीनाम् अधः वा स्थापयति इति। अतः सः तादृशानि स्थलानि अन्विष्य राज्ञ्याः रत्नहारं प्राप्तवान्। इदानीं स्वर्णकारः स्वकीयम् अपराधम् अङ्गीकृतवान्।

सः विवरणम् एवं दत्तवान् – "देवालयं गतः अहं देवालयसमीपे पतितं महाराज्ञ्याः आभरणं दृष्टवान्। तत् जागरूकतया उन्नीय कोषे स्थापयित्वा अङ्गारापणतः अङ्गारगोणीं क्रीत्वा तस्याः अन्तः आभरणं स्थापयित्वा गृहम् आनीतवान्" इति।

राज्ञ्याः आभरणम् अविलम्बेन यत् प्राप्तं तेन सन्तुष्टः राजा जयदेवाय उत्तमानि पारितोषिकाणि दत्तवान्।

गृहस्थस्य मुखात् जयदेवस्य चिन्तनरीतिं तर्कसामर्थ्यं च श्रुत्वा इतोऽपि सन्तुष्टः राजा राजसभायां जयदेवस्य प्रशंसां कृत्वा पुनरपि सत्कृत्य तं स्वकीये आस्थाने उत्तमे स्थाने नियोजितवान्।






कंसस्य मरणं श्रुतवतीनां तत्पत्नीनां दुःखं तु वर्णनातीतम्। ताः मूर्तिमत्यः शोकदेवताः इव व्यवहरन्त्यः पत्युः कलेवरस्य उपरि पतित्वा लुठन्त्यः रोदनं कुर्वन्ति। तासां सामूहिकेन रोदनेन तत्र विचित्रः कोलाहलः उत्पन्नः। स्वपतिं जेतु समर्थः त्रिषु लोकेषु अपि कोऽपि नास्ति इति चिन्तितवतीनां तासाम् इदानीं वज्राघातः इव। तासां विश्वासः धूलिसाज्जातः आसीत्। तत्रापि तथा कृतवान् कश्चन गोपकुलोत्पन्नः सामान्यः बालः! एतेन बालेन कंसः मारितः भवेत् इति न केवलं तासां, अन्यस्य कस्यापि विश्वासः एव न आसीत्।

कंसस्य माता अपि स्नुषाभिः सह अश्रूणि स्रावयन्ती पुत्रशोकेन पत्युः उग्रसेनस्य समीपं गत्वा – "वज्राघातेन विच्छिन्नं पर्वतम् इव पतितं पुत्रं दृष्टवान् खलु? इतोऽपि एवं रोदनेन किं वा प्रयोजनम्? तस्य अन्त्यसंस्कारः निर्वर्तनीयः खलु? कृष्णः बाहुबलेन राज्यं जितवान् अस्ति। अतः कंसस्य उत्तरक्रियार्थं तस्य अनुमतिः प्रार्थनीया। मरणानन्तरम् अपि कृष्णः वैरं न साधयेत् इति भावयामि अहम्" इति उक्तवती।

कंसस्य मरणं दृष्ट्वा समाधानं प्राप्तवान् इव सूर्यः अस्तं गतवान्। सन्ध्यासमये उद्गतं कंसपत्नीनां रोदनं कृष्णः अपि श्रुतवान्। तत् श्रुतवतः तस्य नेत्राभ्याम् अपि अश्रूणि



एवं यावत् कृष्णः वदन् आसीत् तावता उग्रसेनः प्रमुखैः यादववृद्धैः सह आगत्य कृष्णस्य पुरतः शिरः अवनमय्य स्थित्वा अश्रूणि स्रावयन् गद्गदस्वरेण वक्तुम् आरब्धवान् – "वत्स कृष्ण! कंसः यद्यपि मम पुत्रः, तथापि सः लोककण्टकः अतिभयङ्करः च आसीत् इति तु सत्यम् एव। तादृशं मारयन् भवान् यादववंशीयानां महानन्दम् उत्पादितवान्। महतीं कीर्तिं चापि सम्पादितवान्। इदानीम् एतत् समग्रं राज्यं भवदधीनम्। भवान् एव महाराजः" इति।

क्षणकालं विश्रम्य सः कथनं पुनः अनुवर्तितवान् – "काऽपि न्यूनता यथा न भवेत् तथा राज्यपालनं करोतु। महाशत्रुः तु हतः। तद्विषयिणीं वैरभावनां इतः परम् अपि मनसि मा स्थापयतु। अस्मदादिभिः सह औदार्येण व्यवहरतु कृपया। सद्यः तु कंसस्य उत्तरक्रिया करणीया अस्ति। तदर्थं भवतः अनुमतिः यदि स्यात् तर्हि अहं मम पत्नी स्नुषादयश्च तिलोदकं दद्याम। अनन्तरम् अहं जटावल्कलादिकं धृत्वा अरण्यं गमिष्यामि" इति।

तदा कृष्णः सम्भ्रान्तः सन् – "तात! किम् इदं वदति भवान्? कंसस्य उत्तरक्रियार्थं मम अनुमतिः प्रार्थ्यते खलु? अहं तत्र विघ्नं करोमि इति वा भवतः अभिप्रायः? तथा कदापि नास्ति। धनाशया राजपदव्याशया वा मया कंसः न मारितः। लोकहितार्थम् अहं

आगतानि।

कृष्णः परितः स्थितान् बन्धुजनान् उक्तवान् – "कीदृशः अविवेकी अहम्! बाल्यचापलात् प्रेरितः अहम् अत्यावेशेन बह्वीनां मातॄणां वैधव्यं सम्पादितवान्। किन्तु वस्तुतत्त्वे विचार्यमाणे दुष्टस्य कंसस्य मारणं विना अन्यः परिहारः एव नास्ति! यः पितरम् एव निर्बन्धे स्थापयित्वा सर्वाधिकारं चालितवान् तादृशः दुष्टः जगति अन्यः कः स्यात्? अतः एतादृशस्य विषये अनुतापप्रदर्शनम् अपि पापाय एव भवेत्। लोकक्षेमार्थम् एव अहम् एतं दुरात्मानं मारितवान्। राज्यादीनाम् अग्रे का गतिः इति तस्य मारणात् पूर्वम् एव निश्चितवान् अस्मि अपि" इति।

वंशद्रोहिणः लोककण्टकस्य च कंसस्य संहारं कृतवन्। इदानीं या कीर्तिः प्राप्ता तया एव तृप्तः अहम्। इतः परम् अहं यथापूर्वम् अरण्ये निवसन् पशून् चारयन् गोपालकैः सह विहरन् तिष्ठामि। वस्तुतः तु एतत् राज्यं भवतः एव। भवदीयं राज्यम् अपहृतवान् आसीत् भवदीयः पुत्रः कंसः। दुष्टं तं मारयित्वा भवदीयं राज्यं भवते अर्पयन् अस्मि। इतः परम् एतस्य राज्यस्य शासकः भवान् एव। मम वचनं मा निराकरोतु कृपया। मयि वात्सल्यं प्रदर्शयन् भवान् एतत् प्रीत्या अङ्गीकरोतु" इति निवेदितवन्।



अनन्तरं कृष्णः स्वयम्अग्रणीरूपेण तिष्ठन् कंसस्य उत्तरक्रियां साङ्गं निर्वर्त्य उग्रसेनं सिंहासने उपवेश्य राज्याभिषेककार्यम् अपि निर्वर्तितवान्। सर्वे विधयः शास्त्रोक्तरीत्या सवैभवं तृप्तिकररूपेण प्राचलन्। एतत्सर्वं दृष्ट्वा सर्वे कृष्णस्य विषये आदरं गौरवं च प्रकटितवन्तः।

उग्रसेनः बलरामकृष्णौ आशिषा अनुगृह्य प्रीत्या च आलिङ्ग्य कृतज्ञतां प्रकटीकृतवान्। तेषु एव दिनेषु मथुरायां सर्वत्र सञ्चरन् कृष्णः मथुरायाः वैभवं सौन्दर्यं च पूर्णतः अनुभूतवान्।

एकदा कृष्णः बलरामम् उक्तवान् – "अग्रज! जन्मतः अपि आवयोः क्रमशः विद्यासंस्कारः कोऽपि न अभवत्। शिष्टव्यवहारादिकम् अपि अजानन्तौ आवाम् अरण्येषु सञ्चरन्तौ आस्व। इतः परं वा उत्तमगुरोः सकाशात् क्रमशिक्षणं प्राप्तव्यं खलु?" इति।

बलरामः एतं प्रस्तावं सन्तोषेण अङ्गीकृतवान्। अनन्तरं तौ ज्येष्ठान् निवेद्य तेषाम् अनुमतिं प्राप्य अवन्तीपुरे निवसतः सान्दीपनिनामकस्य पण्डितस्य समीपं गत्वा आत्मनः कुलगोत्रादिकं निवेद्य 'विद्या पाठनीया' इति प्रार्थितवन्तौ।

सान्दीपनिः सन्तोषेण तौ शिष्यत्वेन अङ्गीकृत्य चतुरः वेदान्, षड् अङ्गानि, धर्मशास्त्रं, न्यायशास्त्रं, गणितं सङ्गीतं, च पाठितवान्। अर्थशास्त्रस्य अपि अध्ययनं ताभ्यां कृतम्। अश्वारोहण-खड्गचालनादिकं



युद्धतन्त्रम् अपि ताभ्याम् अधीतम्। तयोः अध्ययनशक्तिं दृष्टवतः सान्दीपनेः महत् आश्चर्यम्। 'एतौ मानवरूपेण भूलोकम् आगतौ सूर्यः चन्द्रः च स्यातां वा?'' इति आलोच्य सान्दीपनिः पुनः अपि आश्चर्यम् अनुभवति।

बलरामकृष्णौ विद्याभ्यासं समाप्य गुरुं सान्दीपनिं भक्त्या नमस्कृत्य – ''भवतः कृपया आवां विद्यावन्तौ जातौ। भवतः अपेक्षा या काऽपि पूरणीया अस्ति चेत् वदतु। सा कष्टसाध्या चेदपि चिन्ता नास्ति, पूरयिष्यावः'' इति उक्तवन्तौ।

एतत् वचनं श्रुत्वा सान्दीपनिः क्षणकालम् आलोच्य– ''मम पुत्रः कश्चन आसीत्। सः तीर्थयात्रासन्दर्भे यदा समुद्रे स्नानं कुर्वन् आसीत् तदा कश्चन तिमिङ्गिलः तम् अगिलत्। स च पुत्रशोकः मां सदा बाधते। यदि मम पुत्रः पुनः प्राप्तः भवेत् तर्हि समीचीनं स्यात्'' इति उक्तवान्।

'गुरुणा पृष्टा गुरुदक्षिणा दातव्या एव' इति निश्चित्य कृष्णः अग्रजस्य अनुमतिं प्राप्य धनुर्बाणादीन् स्वीकृत्य समुद्रतीरं गत्वा समुद्रं पश्यन्– ''मम गुरोः सान्दीपनेः पुत्रः भवति निवसता केनापि गृहीतः इति श्रुतम्। सः कः इति प्रदर्शयतु समुद्रराज!'' इति गम्भीरया वाण्या उक्तवान्।

समुद्रराजः तत्क्षणे एव प्रत्यक्षीभूय भयेन नमस्कुर्वन्– ''पञ्चजनः नाम राक्षसः तिमिङ्गिलरूपेण आगत्य भवतः गुरोः पुत्रं गीर्णवान्। तं राक्षसम् एतत्क्षणे एव अत्र आनेष्यामि'' इति उक्तवान्।

अनन्तरक्षणे समुद्रस्य तरङ्गाः तिमिङ्गिलरूपिणं पञ्चजनम् आनीय तीरे पातितवन्तः।

कृष्णः खड्गेन तदीयम् उदरं विदारितवान्। तत्र गुरुपुत्रः न आसीत्। किन्तु कश्चन महाशङ्खः आसीत्। सन्तुष्टः कृष्णः तं शङ्खं स्वस्य उपयोगार्थं स्थापितवान्। पञ्चजनस्य उदरात् प्राप्तम् इत्यतः तस्य शङ्खस्य नाम पाञ्चजन्यम् इति प्रसिद्धम् अभवत्।

किन्तु एतावता अपि गुरुपुत्रः न प्राप्तः




खलु? सः कुत्र गतवान् स्यात् इति आलोच्य यमलोकं गतवान् स्यात् इति निश्चत्य कृष्णः साक्षात् दक्षिणदिशम् अनुसृत्य यमयोकं गतवान्।

तत्र **उन्नतस्य** सिंहासनस्य उपरि उपविष्टवन्तं यमराजं कोपेन पश्यन् – "मम गुरोः सान्दीपनेः पुत्रं भवान् अत्र आनीतवान्। सः प्रत्यर्पणीयः भवता। अन्यथा भवतः प्राणान् एव अपहरिष्यामि" इति उक्तवान्।

आगतं कृष्णं दृष्ट्वा कृष्णस्य कठोरं वचनं श्रुत्वा च भीतः यमः उत्थाय नमस्कृत्य– "कृष्ण! अहं प्राणिनां पापपुण्यादीनां निर्णयं करोमि, न तु प्राणान् आनयामि। प्राणानाम् आनयनं तु मृत्योः कार्यम्" इति उक्तवान्।

"मृत्योः कार्यं वा तत्? तस्य किं तावत् धाष्ट्र्यं वा? मम गुरोः पुत्रस्य प्राणान् अकाले नीतवान्। अहम् एतावत्पर्यन्तं यथा आगच्छेयं तथा कृतवान् अपि। तम् एव नाशयिष्यामि। इतः परं लोके कस्यापि मृत्युभयं न भवेत्" इति उक्त्वा कृष्णः धनुषि बाणं योजितवान्।

एतत् दृष्ट्वा नितरां भीतः मृत्युः गुरुपुत्रस्य प्राणान् पुनरपि शरीरे स्थापयित्वा गुरुपुत्रेण सह प्रत्यक्षम् अभवत्।

एवं कृष्णः समुद्रं, यमं, मृत्युं च भाययित्वा पाञ्चजन्यं शङ्खं, सजीवं गुरुपुत्रं च स्वीकृत्य गुरोः आश्रमम् आगतवान्।

अपेक्षितां गुरुदक्षिणां सम्पाद्य आगतवन्तं कृष्णं, सजीवं पुत्रं च दृष्ट्वा सान्दीपनिः आश्चर्यचकितः परमसन्तुष्टः च। पुत्रं प्रीत्या आलिङ्ग्य अपूर्वां गुरुदक्षिणां समर्पितवन्तं कृष्णम् आशिषा अनुगृहीतवान्।

बलरामः कृष्णः च पुनरपि कानिचन दिनानि गुरोः आश्रमे स्थित्वा अन्ते गुरोः अनुमतिं प्राप्य मथुरां प्रत्यागतवन्तौ।

कृष्णस्य प्रत्यागमनेन मथुरानगरीयाः जनाः अतीव सन्तुष्टाः। सकलाः विद्याः सम्पाद्य प्रत्यागच्छतोः बलरामकृष्णयोः स्वागतार्थम् उग्रसेनः विशेषव्यवस्थां कृतवान्। मार्गे सर्वत्र तोरणानि निर्मितानि। शोभायात्रायाः व्यवस्था अपि कृता। परिवारजनैः सह उग्रसेनः दुर्गद्वारसमीपम्

आगत्य तालनृत्यसङ्गीतादिभिः तौ स्वागतीकृत्य प्रासादम् आनीतवान्।

बलरामकृष्णौ वसुदेवस्य भवनं गत्वा विद्याभ्याससमये प्राप्तान् अनुभवान् विस्तरेण उक्तवन्तौ। एतत् श्रुत्वा सर्वे सन्तुष्टाः जाताः।

एवं मथुरायां बलरामकृष्णौ सुखेन जीवतः। तस्मिन् एव समये मगधदेशे जरासन्धः राजा आसीत्। तस्य पुत्र्यौ आस्तिप्रास्तिनाम्न्यौ कंसस्य पत्न्यौ। ते इदानीं विधवे खलु? जामातुः नाशकं पुत्र्योः वैधव्यसम्पादकं च कृष्णं मारयितुम् इच्छन् जरासन्धः स्नेहितैः राजभिः सम्भूय एकविंशत्यक्षौहिणीसेनया सह मथुरायाः आक्रमणार्थं प्रस्थितवान्। सैनिकानाम् एतं प्रवाहं दृष्ट्वा प्रजाः भीताः।



जरासन्धः यमुनातीरे शिबिरं संस्थाप्य विन्दम् अनुविन्दं च दूतरूपेण कृष्णस्य समीपं प्रेषितवान्। राजकुमारौ तौ उग्रसेनस्य सभाम् आगत्य सभायाम् उपविष्टवन्तं कृष्णम् उद्दिश्य जरासन्धस्य वचनानि उक्तवन्तौ –

"अये कृष्ण! भवान् अग्रजेन बलरामेण सह आगत्य वीराधिवीरं कंसं तदीयम् अनुजं च मारितवान्। कंसः मम जामाता। पुत्र्योः वैधव्यदुःखं द्रष्टुम् अशक्तः अहं प्रतीकारस्य साधनार्थं युद्धार्थम् आगतवान् अस्मि। एतस्मिन् निर्णायके युद्धे भवतः मम वा अन्यतरस्य जीवनं भवेत्। इतः परं भूलोके आवयोः उभयोः अपि स्थितिः न भविष्यति। यदि धैर्यं स्यात् तर्हि सम्मुखम् आगच्छतु। पुनः मम मुखं द्रष्टुं भवान् सजीवं न स्थास्यति। युद्धात् पलायितः भवान् पातालं प्रविशति चेदपि भवन्तम् अनुधाव्य अहं मारयिष्यामि एव। अहं कीदृशः, मम सामर्थ्यं कीदृशम् इति सात्यकिम्, अक्रूरं वा पृच्छतु नाम। अहम् इदानीं मथुरानगरम् आक्रम्य स्थितवान् अस्मि। मरणार्थं सिद्धः भवतु" इति।

दूतयोः मुखात् निर्गतानि एतानि जरासन्धस्य वचनानि श्रुत्वा श्रीकृष्णः हसन् तौ दूतौ उद्दिश्य – "सन्तोषस्य विषयः एषः। अहं जरासन्धः इव बहुभाषी न। जरासन्धस्य

मदम् अपनेतुम् अहम् एव आगच्छेयम् इति चिन्तयन् आसम्। अत्रान्तरे सः एव अत्र स्वयम् आगतः। युक्तम् एव एतत्। राक्षसेन योजितं शरीरं पुनः अपि द्विधा विदारयिष्यामि। यथा कंसं मारयित्वा उग्रसेनाय सिंहासनम् अर्पितं तथैव जरासन्धं मारयित्व। तदीयं पुत्रं राज्ये अभिषेचयिष्यामि'' इति। जरासन्धेन दूतरूपेण प्रेषितौ तौ राजकुमारौ कृष्णस्य सत्कारं प्राप्य प्रतिगत्य कृष्णस्य वचनानि जरासन्धं श्रावितवन्तौ।

जरासन्धस्य नाम्नः श्रवणेन एव उग्रसेनादीनां यादवानां धैर्यं विनष्टम् अभवत्। तेषु यादवेषु अन्यतमः विकद्रुः नाम यदुवृद्धः कृष्णम् एवम् उक्तवान् –

''वत्स, कृष्ण! कमले ब्रह्मणः जननम् इव यदुवंशे भवतः जननं जातम्। भवतः उपस्थितौ यादवानां न कापि भीतिः। जरासन्धस्य तु बहूनां महाराजानां साहाय्यम् अस्ति। युक्तिनिर्माणे सः परमकुशलः अपि। तदीयः स्वभावः अपि क्रूरः। तं युद्धे पराजेतुं भवान् एकः एव समर्थः। कंसः पूर्वं यदा राजा आसीत् तदा गर्वेण सः दुर्गरक्षणार्थं कामपि व्यवस्थां न कृतवन् आसीत्। आयुधानि आहारपदार्थाः वा तेन न सङ्गृहीताः। वस्तुतः अपि मथुरायाः स्थितिः इदानीं शोचनीया अस्ति। इदानीं शत्रुः अकस्मात् आक्रमणं कृतवान् अस्ति। यदि इदानीं मौनं तिष्ठेम तर्हि राज्यं हस्तच्युतं भवेत्। पूर्वं मुचुकुन्दः, पद्मवान्, सारसः, हरितः इति चत्वारः यादवराजाः ऋक्षवत्-विन्ध्य-सह्यपर्वतेषु पूर्वसमुद्रे स्थितेषु द्वीपेषु च अनेकानि दुर्गाणि निर्मितवन्तः आसन्। ततः पूर्वं माधवो नाम राजा मथुरां निर्माय पालितवन्। इदानीम् एतस्य दुर्गस्य समीकरणं न सुलभसाध्यम्। अतः अन्यस्य कस्यचित् दुर्गस्य आश्रयणं वरम् इति मम अभिप्रायः। युक्तः समयः एषः इति भावयित्वा एतत्सर्वम् इदानीम् उक्तवान् अस्मि। पूर्वापरं सम्यक् आलोच्य यथायोग्यम् आचरितुम् अर्हति भवान्'' इति।





# निःस्वार्थं वेणुवादनम्

**सा**क्षरपुरे पूर्वं विरूपाक्षः नाम कश्चन धनिकः आसीत्। ललितकलासु तस्य विशेषासक्तिः। तत्रापि गाने सः इतोऽपि आसक्तः।

विरूपाक्षः पद्मावतीनामिकां सुन्दरीं परिणीतवान्। अनुरूपं दाम्पत्यम् आसीत् तयोः। किन्तु दौर्भाग्यवशात् एकवर्षाभ्यन्तरे पद्मावती केनापि व्याधिना ग्रस्ता अभवत्। वैद्यानां सर्वविधचिकित्साः अपि असफलाः अभवन्। अचिरात् एव सा प्राणान् त्यक्तवती।

विरूपाक्षः पत्नीवियोगजातं दुःखं सोढुम् अशक्तः सन् सदा विषादगीतानि गायति। एवं विषादगीतानाम् आलापेन तेन काचित् तृप्तिः लभ्यते।

विरूपाक्षस्य गानं श्रोतुं ग्रामीणाः केचन प्रतिदिनं तदीयं गृहम् आगच्छन्ति स्म। तेषाम् आगमनेन विरूपाक्षस्य काऽपि बाधा नास्ति। अतः सः तेषाम् आगमनस्य निषेधं न करोति। एवम् आगताः विरूपाक्षस्य पुरतः स्वकीयाः समस्याः निवेदयन्ति। बहूनां तु धनाभावः एव समस्या। पर्याप्तमात्रेण धनदानेन तादृशानां समस्यां परिहरति विरूपाक्षः।

एषा वार्ता कर्णाकर्णिकया सर्वत्र प्रसृता। अतः धनम् अपेक्षमाणाः बहवः विरूपाक्षस्य गृहम् आगन्तुम् आरब्धवन्तः। पत्न्याः मरणतः विरक्तिं प्राप्तवान् विरूपाक्षः धनव्ययम् अगणयन् स्वेच्छया दानं करोति।

एवं स्वेच्छया दानेन विरूपाक्षस्य सम्पत्तिः समग्रतया समाप्ता। इदानीं विरूपाक्षः एव जीवननिर्वहणार्थं क्लेशम् अनुभवति। इदानीं विशालम् एकं गृहं, धृतानि वस्त्राणि च केवलं तदीयानि सन्ति, न अन्यत्।

'इतःपरं दातुं विरूपाक्षस्य समीपे किमपि



नास्ति' इति ज्ञात्वा जनाः क्रमशः तदीयं गृहं प्रति आगमनं त्यक्तवन्तः। एतत् दृष्ट्वा विरूपाक्षः महान्तं खेदम् अनुभूतवान्।

'अत्र मम स्थित्या कस्यापि किमपि प्रयोजनं नास्ति' इति आलोच्य विरूपाक्षः विरक्तिं प्राप्य दूरबन्धवे कस्मैचित् गृहं दत्त्वा तीर्थयात्रार्थं प्रस्थितवान्।

एवं गतः सः काशीं गत्वा एकत्र मार्गस्य पार्श्वे उपविश्य उच्चस्वरेण गानम् आरब्धवान्। किन्तु तदीये गाने कोऽपि आसक्तिं न प्रदर्शितवान्। केचन तं भिक्षुकं मन्यमानाः तस्य पुरतः नाणकानि क्षिप्तवन्तः। अन्ये केचन तस्मै रोटिकादिकं दत्तवन्तः।

'एतादृशेन गानेन ममापि न विशेषतृप्तिः, जनानाम् अपि न सन्तोषः। इतःपरं मम जीवनेन किं प्रयोजनम्?' इति आलोच्य जीवनात् जुगुप्सितः विरूपाक्षः गङ्गायां पतनार्थम् उद्युक्तः जातः।

तदा कश्चन संन्यासी तं रक्षित्वा स्वकीयम् आश्रमं प्रति नीत्वा उक्तवान्– "किं भोः, कीदृशम् अकार्यं कर्तुम् उद्युक्तः भवान्? मध्यवयस्कस्य दृढकायस्य अपि भवतः आत्महत्यार्थं प्रयत्नः किमर्थम्? माम् अपि वदतु तावत्। यदि शक्यं साहाय्यं करिष्यामि" इति।

विरूपाक्षः आत्मनः कथाम् आद्यन्तं निवेद्य उक्तवान्– "श्रीमन्! पत्नीमरणात् जातं दुःखं मम मुखात् विषादसङ्गीतं निस्सारयति स्म। एतेन मम काचित् तृप्तिः अपि आसीत्। सङ्गीतं तीव्रतरम् अपि दुःखं शमयति इति सत्यं मया ज्ञातम्। सङ्गीतं श्रोतुं बहवः मम गृहम् आगच्छन्ति स्म। आत्मनिमित्तं गीयमानात् सङ्गीतात् अपि बहवः सन्तुष्यन्ति इति मम विशेषतृप्तिः। किन्तु इदानीं धनरहितस्य मम गृहं कोऽपि न आगच्छति। पत्नीमरणदुःखं तु अस्ति एव। मत्तः किमपि प्रयोजनं नास्ति इत्येव महत् दुःखं मम। निष्प्रयोजकं जीवनं किमर्थं भवेत्? एतादृशस्थितौ आत्महत्या एव श्रेयस्करी खलु?" इति।

तदा संन्यासी हसन्– "भोः! जातमात्रस्य



जीविनः यथा मरणं सहजं तथैव जीवनम् अपि सहजम् एव। आत्महत्या कृता चेत् अन्यविधं जीवनं लभ्येत, न तु मुक्तिः। अतः यावत् स्वाभाविकं मरणं न भवति तावत् अत्रैव जीवनम् उचितम्। बलात् प्राणत्यागः अधर्माय। भवतः मनसि कीदृशः अभिलाषः अस्ति इति वदतु। अहं पूरयिष्यामि" इति उक्तवान्।

तदा विरूपाक्षः विनयेन उक्तवान्– "श्रीमन्! मानवजीवने काचित् न्यूनता भवति एव। सर्वे चिन्तयन्ति यत् धनं तां न्यूनतां पूरयति इति। किन्तु एतत् न वास्तविकम्। मम अनुभवः यत् सङ्गीतं सर्वविधान् क्लेशान् विस्मारयत् मनःशान्तिं जनयति इति। किन्तु सङ्गीते मम प्रावीण्यं किमपि नास्ति। अतः मम कण्ठात् निर्गतः स्वरः मां केवलं तोषयति। एषा एव व्यथा मम। सर्वेषाम् अपि सन्तोषः यथा स्यात् तथा सङ्गीतं निस्सरेत् मम मुखात्। तस्य श्रवणेन सर्वे मनःशान्तिं प्राप्नुयुः। सङ्गीतं श्रावयतः ममपि प्रतिफलापेक्षाबुद्धिः न स्यात्। एतादृशं मनोभिलाषं पूरयितुं शक्नोति वा भवान्? एषा बालिशकल्पना इति मां न उपहसति खलु?" इति।

संन्यासी विरूपाक्षाय एकं स्यूतं वेणुं च दत्त्वा उक्तवान्– "भवतः मुखस्पर्शेन एतस्मात् वेणुतः अपूर्वं सङ्गीतं निस्सरति। किन्तु तेन भवता काऽपि मनःशान्तिः न लभ्यते, श्रोतारः तु अलौकिकम् आनन्दं प्राप्नुवन्ति। तादृशानाम् आनन्दं पश्यता भवता तृप्तिः प्राप्तव्या। एषः स्यूतः भवते आहारं वस्त्राणि च ददाति। एवं च पराश्रयणं विना भवान् सर्वेषु आनन्दं मनःशान्तिं च उत्पादयति। भवद्विषये केवलम् एषः स्यूतः वेणुः च प्रयोजनकारी भवति। अन्ये एतदुभयं वशीकुर्वन्ति चेदपि किमपि प्रयोजनं प्राप्तुं न शक्नुवन्ति। इदानीं तृप्तः खलु भवान्?" इति।

विरूपाक्षः संन्यासिना दत्तं स्यूतं वेणुं च स्वीकृत्य– "महानुग्रहः भवतः! इतः परम् अहं स्वग्रामं गत्वा मनोरथं पूरयिष्यामि" इति उक्त्वा साष्टाङ्गं नमस्कारं कृतवान्।



संन्यासी विरूपाक्षम् आशिषा अनुगृह्य– ''निःस्वार्थबुद्ध्या परोपकारः करणीयः इति भवतः सङ्कल्पः योग्यः एव। किन्तु मायामये अस्मिन् जगति सत्सङ्कल्पानां विघ्नाः बहवः। सत्सङ्कल्पस्य लोपेन भवति यदि स्वार्थभावना उदियात् तर्हि एतत् अपूर्वं वस्तुद्वयं शक्तिहीनं भवेत्। निःस्वार्थभावनया एव भवान् स्वसङ्कल्पं यदि परिवर्तयेत् तर्हि एतत् वस्तुद्वयम् अन्येभ्यः शान्तिं सन्तोषं च दातुम् असमर्थं सत् भवते तृप्तिं ददाति। तदा स्यूतप्रभावतः भवान् नष्टम् ऐश्वर्यं पुनः प्राप्तुम् अपि अर्हति। एवं भवान् यावत् निःस्वार्थभावनया तिष्ठति तावत् एतयोः वस्तुनोः साहाय्येन परोपकारार्थम् आत्मतृप्त्यर्थं वा जीवितुम् अर्हति'' इति उक्तवान्।

विरूपाक्षः संन्यासिनः अनुमतिं प्राप्य स्वग्रामं प्रत्यागतवान्। आरम्भे जनाः तम् उपेक्षितवन्तः। किन्तु क्रमशः तदीयं वेणुगानं सर्वेषु आकर्षणम् अजनयत्। तस्य वेणुगानस्य श्रवणार्थं जनाः आगन्तुम् आरब्धवन्तः।

एवं मासाभ्यन्तरे तदीयं नाम ग्रामे ग्रामान्तरे च प्रसिद्धं जातम्। सुदूरात् आगताः जनाः तस्य वेणुगानं शृण्वन्तः इहप्रपञ्चं विस्मृत्य मनःशान्तिं प्राप्नुवन्ति स्म।

विभिन्नैः कारणैः मानसिकक्लेशैः पीड्यमानाः जनाः तस्य वेणुगानं शृण्वन्तः मनःशान्तिं प्राप्नुवन्ति।

वेणुगानतः विरूपाक्षः सन्तोषं न प्राप्नोति चेदपि अन्ये ततः यत् तुष्यन्ति तत् दृष्ट्वा सः विशेषतः तृप्तिम् अनुभवति।

किन्तु एषा स्थितिः चिरकालं न अनुवृत्ता। विरक्त्या तीर्थयात्रार्थं गतः विरूपाक्षः एवं प्रत्यागच्छेत् इति गृहस्य रक्षणे नियुक्तः दूरबन्धुः न निरीक्षितवान् आसीत्। विरूपाक्षस्य गृहं मम एव भविष्यति इति तस्य विचारः आसीत्। इदानीं विरूपाक्षस्य प्रत्यागमनेन तदीयः मनोरथः भग्नः।

अतः सः दूरबन्धुः आलोचितवान् यत् केनापि उपायेन पुनरपि विरक्तं कृत्वा विरूपाक्षः तीर्थयात्रार्थं प्रेषणीयः इति। सः विरूपाक्षविषये प्रतिदिनम् अपि अपप्रचारम् आरब्धवान्।

'आत्मप्रयोजनं विना विरूपाक्षः ग्रामीणानां पुरतः वेणुगानं सर्वथा न कुर्यात्। किन्तु सः स्वार्थः कः इति तु न ज्ञायते' इति सर्वत्र वदति सः दूरबन्धुः। केचन ग्रामीणाः एतद्विषये विश्वासं प्रकटितवन्तः अपि।

एकदा ग्रामीणाः विरूपाक्षस्य सङ्गीतं श्रोतुं यथापूर्वम् उपविष्टवन्तः आसन्। तदा सः दूरबन्धुः उत्थाय– "भोः विरूपाक्ष! भवान् केनापि दुरुद्देशेन स्वार्थभावनया वा एवं वेणुं वादयति इति जनानाम् अभिप्रायः अस्ति। किन्तु अत्र न जाने, सत्यांशः कियान् अस्ति इति। प्रयोजनम् अनुद्दिश्य मन्दोऽपि न प्रवर्तते। किं तत् प्रयोजनम् इति सर्वे ज्ञातुम् इच्छन्ति। तत् वदतु तावत्। अन्यथा सर्वेषु भवतः विषये दुरभिप्रायः जायेत।" इति उक्तवान्।

"वेणुवादने मम स्वार्थः कोऽपि नास्ति एव। मम वेणुवादनं श्रुत्वा केचन ग्रामीणाः सन्तोषं मनःशान्तिं च प्राप्तुवन्ति। एतत् दृष्टवतः ममापि विशेषतृप्तिः। एषा एव वेणुवादनस्य पृष्टभूमिः। इतोऽपि अधिकस्य प्रयोजनस्य निरीक्षा नास्ति मम" इति वस्तुस्थितिं निरूपितवान् विरूपाक्षः।

"सङ्गीतशास्त्रे अहं दक्षः इति भावना भवतः यदि स्यात् तर्हि राजास्थाने भवता एतत् कौशलं प्रदर्शनीयम्। अज्ञानां पुरतः अत्र वेणुवादनेन किं प्रयोजनम्?" इति पृष्टवान् सः दूरबन्धुः।



विरूपाक्षः क्षणकालस्य मौनानन्तरम् उक्तवान्– "या विद्या मनःशान्तिदायिनी भवति सा सत्कारम् अन्विष्य न गच्छति। मनःशान्तिं यः इच्छति, सः राजा ततोऽप्यधिको वा भवेत् नाम, सः स्वयं मम समीपम् आगच्छेत्। कुत्रापि मम गमनस्य आवश्यकता एव नास्ति" इति।

एतत् श्रुत्वा सः दूरबन्धुः जनान् उद्दिश्य– "भोः, दृष्टः खलु विरूपाक्षस्य दुरहङ्कारः? अनन्यगत्या भवन्तः सङ्गीतं श्रोतुम् आगच्छन्ति इति सः भावयति। अपमानास्पदं खलु एतत्? किं स्वाभिमानः नास्ति वा भवताम्?" इति।

तत्र सम्मिलिताः जनाः एतत् श्रुत्वा अपि मौनं स्थितवन्तः। तदा इतोऽपि कुपितः सः



दूरबन्धुः– "ये एतस्य दुरहङ्कारं जानन्तः अपि मौनं स्थातुं शक्नुवन्ति ते केवलम् एतस्य सङ्गीतं श्रोतुम् अर्हन्ति। जनाः सहन्ते इत्येव एषः दुरहङ्कारपूर्णानि वचनानि वदति। सर्वेषां मानाभिमानादयः धूलिसाज्जाताः। अहो दौर्भाग्यम्!" इति उक्तवान्।

इदानीम् अपि जनाः कामपि प्रतिक्रियां न प्रकटितवन्तः।

तदा विरूपाक्षः झटिति उत्थाय– "भवतां सर्वेषां अभिप्रायः समानः इति भाति। अतः इतः परं भवन्तः मम सङ्गीतं श्रोतुं न अर्हन्ति" इति उक्तवान्।

तदा अपि जनाः मौनं सर्वं पश्यन्तः आसन्। विरूपाक्षः ततः निर्गतवान्।

अनन्तरदिने सः दूरबन्धुः विरूपाक्षस्य समीपम् आगत्य– "भोः, क्षाम्यतु माम्। जनेषु स्थितः दुरभिप्रायः प्रकटीकरणीयः इति उद्देशेन ह्यः मया तथा उक्तम्। भवद्विषये मम सद्भावः अस्ति एव। ह्यस्तनघटनया खिन्नः भवान् पुनः अपि इतः गच्छेत्। तथा गमनम् अस्ति चेत् एतत् गृहं मह्यम् एव अर्पणीयम्। विशालपरिवारं निर्धनं मां भवान् जानाति एव" इति उक्तवान्।

विरूपाक्षः प्रत्युत्तरं किमपि अयच्छन् मौनम् आश्रितवान्।

केषाञ्चित् दिनानाम् अनन्तरं श्रीकण्ठनामकः विरूपाक्षस्य गृहम् आगत्य– "भोः, तद्दिने भवतः दूरबन्धुः दुराशया असूयया च तथा उक्तवान्। किन्तु तस्य वचनेषु कोऽपि न विश्वसिति। भवतः सङ्गीतं सर्वे इच्छन्ति एव। मम वचनेषु भवतः विश्वासः यदि न स्यात् तर्हि स्वयं भवान् एव सर्वाणि गृहाणि गत्वा एकैकस्य अपि अभिप्रायं सङ्गृह्णातु। मम वचनं यदि सत्यं तर्हि यथापूर्वं वेणुगानं श्रावयतु" इति निवेदितवान्।

विरूपाक्षः श्रीकण्ठेन सह प्रतिगृहं गत्वा ग्रामीणानाम् अभिप्रायं सङ्गृहीतवान्। एकैकः अपि तस्य सङ्गीतस्य विषये सदभिप्रायं प्रकट्य पुनःश्रवणकुतूहलं प्रदर्शितवान्।

तदा श्रीकण्ठः पुनः उक्तवान्– "इदानीं वस्तुस्थितिः ज्ञाता खलु? अद्य आरभ्य एव

वेणुगानेन पुनः अपि सर्वान् सन्तोषयतु" इति।

तदा विरूपाक्षः झटिति स्यूततः वेणुं निष्कास्य किञ्चित्कालं वादयित्वा– "कथम् अस्ति एतत्?" इति पृष्टवान्।

तदा श्रीकण्ठः आश्चर्यं प्रकटन्– "एतत् तु सामान्यम्। अत्र विशेषः कोऽपि न दृष्टः मया" इति उक्तवान्।

"अहं तु एतत् अपूर्वत्वेन एव शृणोमि। इतःपरं मम वेणुगानं मां केवलं सन्तोषयति, न तु सर्वान्" इति उक्तवान् विरूपाक्षः।

श्रीकण्ठः विरूपाक्षस्य आशयं अजानन् आश्चर्यं प्रकटितवान्। तदा विरूपाक्षः संन्यासिनः अनुग्रहं वचनं च श्रावयित्वा उक्तवान्– "वस्तुतः मम सङ्गीतं ग्रामीणाः यदि मनःपूर्वकम् इच्छेयुः तर्हि, तद्दिने मम दूरबन्धुः सभायां मद्विरुद्धम् आक्षेपं यदा कृतवान् तदा एव विरोधं प्रकटितवन्तः स्युः। किन्तु केनाऽपि कापि प्रतिक्रिया न प्रकटिता। मम निर्गमनम् अपि ते मौनं दृष्टवन्तः। एतेन सिध्यति यत् मम अपूर्वं सङ्गीतं श्रोतुं तेषाम् अर्हता नास्ति इति। यद्विषये अत्यधिका प्रीतिः भवति तद्विषयकस्य अन्याय्यस्य प्रतिभटनं कुर्वन्ति जनाः। तद्दिने ग्रामीणाः मद्विषये अन्याय्यं प्रवर्तमानं दृष्ट्वा अपि मौनं स्थितवन्तः। एतेन तेषां प्रीतिः प्रमाणिता अभवत्। अतः एतादृशानां निमित्तं मम सङ्गीतं न भविष्यति" इति।

सर्वसन्तोषकारिणः वेणुगानस्य स्थगने विरूपाक्षस्य स्वार्थः कोऽपि नास्ति इति ज्ञातवान् श्रीकण्ठः। जनानां व्यवहारस्य आन्तर्यम् अपि ज्ञातं तेन। अतः सः चिन्ताक्रान्तः सन् मौनं ततः निर्गतवान्।

विरूपाक्षः ग्रामात् बहिः एकां पर्णशालां निर्माय तत्र वसन् संन्यासिना दत्तस्य स्यूतस्य प्रभावेण धनं प्राप्नुवन् तत् धनं निर्धनानां कृते निर्धनबालानां विद्याभ्यासार्थं च उपयुक्तवान्। एतादृशेन कार्येण मनःसन्तोषं विशेषतृप्तिं च अनुभवन् सः सुखेन जीवितवान्।





# पिशाचघण्टा

पूर्वं चीनादेशे उभौ सहोदरौ आस्ताम्। तौ यद्यपि सहोदरौ तथापि तयोः स्वभावे, चिन्तने, आचारे, विचारे च महदन्तरं दृश्यते स्म।

अग्रजस्य तु कलुषिता बुद्धिः। किन्तु अनुजस्य बुद्धिः अतीव विमला। अग्रजस्य स्वभावः परमकुटिलः चेत् अनुजस्य स्वभावः नितरां सरलः। अग्रजः जगद्दूषकः, अनुजः परोपकारी। अतः ग्रामीणाः अग्रजं दूरीकुर्वन्ति, अनुजं च प्रीत्या पश्यन्ति।

पितुः मरणानन्तरं अग्रजः समग्रां सम्पत्तिं स्वायत्तीकृत्य धनम् ऋणरूपेण दत्त्वा विशेषवृद्धिं सम्पादयन् अल्पे एव काले महाधनिकः जातः।

अग्रजस्य अन्याय्यं व्यवहारं पश्यन् अपि अनुजः विरोधवचनानि न उक्तवान्। असूयाम् अपि अननुभवन् सर्वं दैवायत्तम् इति भावयन् निर्मलेन मनसा ग्रामीणानां साहाय्यं करोति सः। जनैः अनुकम्पया श्रमानुगुणं यत् दीयते तेन तृप्त्या जीवति अनुजः।

एकदा कश्चित् ग्रामीणः अनुजम् आहूय उक्तवान्– "एतं शर्करापाकं पार्श्व-ग्रामस्थाय् मम बान्धवाय दत्त्वा आगच्छतु" इति।

एतत् अङ्गीकृत्य अनुजः शर्करापाक-पात्रम् उन्नीय प्रस्थितवान्। मार्गः शिलापाषाणादिभिः आवृतः आसीत्। पूर्वदिने जातायाः वृष्टेः कारणतः स्खलनभीतिः अपि आसीत्। कुत्रचित् तीक्ष्णाः शिलाखण्डाः पादं पीडयन्ति स्म।

एतादृशे विषमे मार्गे गच्छन् अनुजः अकस्मात् पतितवान्। शर्करापाकपात्रं तस्य उपरि पतितम्। शर्करापाकेन सः स्नातः अभवत्।

"चीनादेशस्य जानपदकथा"

यावत् सः उत्थातुम् उद्युक्तः तावता केचन पिशाचाः तत्र आगत्य– "अहो! महती शर्करामूर्तिः!" इति उद्गारं प्रकटयन्तः शर्करां खादितुम् अग्रे आगतवन्तः। "एतावन्महतीं शर्करामूर्तिं वयं युगपत् एव खादितुं न शक्नुमः। अतः एतां शर्करामूर्तिं गुहां नयामः" इति आलोच्य तम् उन्नीय नीत्वा गुहायां शिलायाः उपरि शायितवन्तः।

अनन्तरं केचन पिशाचाः तस्य देहस्य उपरि स्थितां फलकाकारिकां शर्करां किञ्चित् खादितवन्तः।

अत्रान्तरे शृङ्गयुतः तेषां नायकः तत्र आगत्य– "इदानीं यावत् खादितं तावता अलम्। अस्माभिः भोजनादिकं समाप्य क्रीडार्थं गन्तव्यम् अस्ति खलु? अतः तां घण्टाम् आनयन्तु" इति अवदत्।

एतावत्पर्यन्तम् अपि अनुजेन अविचलतया स्थितम् आसीत्। यदि पिशाचाः तं मनुष्यत्वेन जानीयुः तर्हि विविधाभिः हिंसाभिः तं पीडयेयुः एव। अतः एव सः श्वासं यावच्छक्यं निरुध्य जागरूकतया मन्दं श्वासोच्छ्वासं कुर्वन् शर्करामूर्तिः इव एव स्थितवान् आसीत्।

नायकः पिशाचः सेवकपिशाचेन आनीतां घण्टाम् अवादयत्। तावता तत्र विविधानि भोजनवस्तूनि उपस्थितानि अभवन्।

तेभ्यः भोजनवस्तुभ्यः यः गन्धः आगच्छति तम् आघ्रातवतः अनुजस्य मुखतः लाला



स्रवति। तथापि सः आत्मानं निगृह्य मौनं स्थितवान्।

ते पिशाचाः तानि भोजनवस्तूनि खादित्वा घण्टाम् एकत्र स्थापयित्वा नृत्यन्तः कूर्दन्तः च क्रीडनार्थं गतवन्तः।

यदा गुहा निर्जना जाता तदा अनुजः सावधानतया उत्थाय पिशाचानां तां घण्टां युतकस्य अन्तः गोपयन् महता वेगेन गृहं प्रति धावितवान्।

तद्दिनतः तस्य भोजनसमस्या परिहृता अभवत्। घण्टासाहाय्येन अपेक्षितानि भक्ष्याणि सृजन् अनुजः सुखेन दिनानि यापयति।

अनुजेन अकस्मात् प्राप्तं सौभाग्यं श्रुत्वा



अग्रजः अनुजाय असूयति। सः अनुजस्य मुखात् प्रवृत्तं समग्रं श्रुतवान्। मया अपि एवम् एव ऐश्वर्यं प्राप्तव्यम् इति आलोच्य सः अपि शर्करापाकपूर्णं पात्रं शिरसि आरोप्य पर्वतमार्गम् अनुसृतवान्।

इदानीं तस्मिन् मार्गे वस्तुत स्खलनादिभीतिः सर्वथा न आसीत्। तथापि अग्रजः उद्देशपूर्वकं पतन् आत्मनः उपरि शर्करापात्रं पातितवान्। शर्करापाकेन अनुलिप्तः अभवत् सः।

किञ्चित्कालानन्तरं पिशाचाः तत्र आगतवन्तः। अग्रजं दृष्ट्वा – "तद्दिने वञ्चयित्वा पलायितः शर्करामानवः अत्र अस्ति। एतं गुहां नयाम। अग्रिमविधानं तत्र निर्णेष्यामः च" इति ते पिशाचाः परस्परम् उक्तवन्तः।

तेषां वचनं श्रुत्वा अग्रजः– 'मम उपायः फलितः' इति सन्तोषम् अनुभूतवान्।

पिशाचाः तं नीत्वा गुहायां शिलायाः उपरि शायितवन्तः। 'अनुजस्य पुरतः यथा प्रवृत्तं तथैव मम पुरतः अपि घण्टाकौशलं प्रवर्तते' इति कातरतया प्रतीक्षमाणः आसीत् अग्रजः।

तदा तेषां नायकः पिशाचः– "पूर्वम् एषः शर्करामानवः अस्मान् वञ्चयित्वा घण्टां चोरयित्वा च पलायितवान् खलु? तस्य प्रतिफलम् अनुभवतु एषः इदानीम्। एतं भाण्डे स्थापयित्वा क्वथयाम" इति आज्ञाप्य क्वथनप्रकारम् अपि असूचयत्।

पिशाचनायकस्य आज्ञानुगुणं ते पिशाचाः तम् उन्नीय भाण्डे पातयित्वा तदुपरि जलं पातितवन्तः। अनन्तरं भाण्डस्य अधः अग्निं ज्वालितवन्तः।

यथा यथा जलस्य तापः अवर्धत तथा तथा अग्रजः कष्टम् अनुभवति। अन्ते तापं सोढुम् अशक्तः सः भाण्डात् उत्प्लुत्य गुहाम् अतिक्रम्य धावितवान्।

अनुसृत्य आगताः पिशाचाः अल्पे एव समये तं गृहीत्वा बद्धवन्तः।

कुपितः पिशाचनायकः उक्तवान्– "एषः पलायने चतुरः। अतः इदानीं यत् अत्र तिष्ठति तत् आजीवनं सः यथा स्मरेत् तथा कृत्वा प्रेषयाम" इति।

अनन्तरं नायकस्य आज्ञानुगुणम् एकैकः अपि पिशाचः तस्य नासिकाम् द्वादशाङ्गुलमितम् आकर्षत्। एवं तदीयां नासिकां सुदीर्घां कृत्वा ते पिशाचाः लीलया तं सुदूरं क्षिप्तवन्तः।

शरीरे सर्वत्र व्रणं प्राप्य असह्यया वेदनया पीड्यमानः अग्रजः नासिकां हस्तेन वलयाकारेण उन्नीय कथञ्चित् स्वकीयं गृहं गतवान्।

'पिशाचेभ्यः विशेषलाभं प्राप्य पतिः सन्तोषेण नृत्यन् आगच्छेत्' इति चिन्तयन्ती आसीत् अग्रजस्य पत्नी। पत्युः आह्वानं श्रुत्वा द्वारम् उद्घाटितवती सा पत्युः दुर्दशां दृष्ट्वा आश्चर्येण स्तब्धा अभवत्।

"भोः, समीपं मां आगच्छतु। शरीरे सर्वत्र वेदना। नासिकायाः हानिः अपि सम्भवेत्" इति कोपेन उक्तवान् अग्रजः।

"भवतः नासिकायाः का एषा विचित्रा दशा? किम् अभवत् भोः?" इति वदन्ती सा पत्युः नासिकां स्पृष्ट्वा परीक्षितवती।

अग्रजः आत्मानं समश्वास्य पत्न्यै प्रवृत्तं समग्रं निवेदितवान्।

"पिशाचाः एव एवं कृतवन्तः खलु? तर्हि एतस्य परिहारोपायम् अपि ते जानन्ति एव। अहं भवतः अनुजस्य साहाय्यम् एतद्विषये पृच्छामि" इति उक्त्वा गृहात् निर्गतवती अग्रजस्य पत्नी।

यदा सा अनुजस्य गृहं प्राप्तवती तदा



अनुजः हलम् उन्नीय कृषिकार्यार्थं गन्तुम् उद्युक्तः आसीत्। तस्य तु विचित्रा वृत्तिः। अपेक्षितं सर्वं दातुं घण्टा शक्नोति इति सः जानाति। तथापि परिश्रमं विना जीवितुं सः न इच्छति। अतः एव घण्टासाहाय्यतः कृष्युपयोगीनि साधनानि प्राप्य परिश्रमेण कृषिं कुर्वन् तृप्त्या जीवति सः।

गृहम् आगताम् अग्रजस्य पत्नीं दृष्ट्वा आश्चर्येण सः पृष्टवान्– "कः विशेषः? किं निमित्तम् अत्र आगतवती?" इति।

तदा सा अश्रूणि स्रावयन्ती पत्या प्राप्तां दुर्दशाम् आद्यन्तं निवेदितवती।

"भवती चिन्तां न करोतु। अहं पिशाचवसतिसमीपं गत्वा समस्यायाः

परिहारार्थं किञ्चित् उपायं ज्ञात्वा आगमिष्यामि" इति भ्रातृजायां समाश्वासितवान् अनुजः।

तद्दिने एव सः पिशाचानां गुहां गत्वा कुत्रचित् निलीय पिशाचानां सम्भाषणं श्रुतवान्।

वार्तालापमध्ये एकः लघुपिशाचः अवदत्– "हन्त! तस्य शर्करामनुजस्य नासिकायाः गतिः कीदृशी स्यात् इति न जानामि" इति।

"तस्य बुद्धिमत्ता यदि स्यात् तर्हि स्वसमीपे स्थितस्य साधनस्य रहस्यं सः जानीयात्। तां घण्टां वादयन् 'ह्रस्वीभवतु, ह्रस्वीभवतु' इति उक्तं चेत् क्रमशः नासिका पूर्वावस्थां प्राप्स्यति" इति अवदत् पिशाचनायकः।

एतत् सम्भाषणं श्रुत्वा अनुजः झटिति गृहं प्रत्यागतवान्। पेटिकायां स्थापितां घण्टां स्वीकृत्य अग्रजस्य गृहं गतवान् च।

"उपायं ज्ञात्वा खलु आगतवान् भवान्! शीघ्रं मम आर्यस्य नासिकां समीकरोतु भोः" इति त्वरां प्रदर्शितवती अग्रजस्य पत्नी।

अनुजः घण्टां एकवारं ताडयित्वा 'ह्रस्वीभवतु' इति उक्तवान्।

नासिका किञ्चित् ह्रस्वा जाता। अनुजः पुनः अपि घण्टां वादयित्वा 'ह्रस्वीभवतु' इति उक्तवान्। नासिका इतोऽपि ह्रस्वा जाता। एवं जागरूकतया वादयन् अग्रजस्य नासिकां ह्रस्वीकुर्वन् आसीत् अनुजः।

'एषः वृथा समयं यापयन् अश्रद्धां प्रदर्शयन अस्ति' इति आलोचितवती अग्रजस्य पत्नी। विलम्बम् असहमाना सा अनुजस्य हस्तात् घण्टां हठात् स्वीकृत्य 'ह्रस्वीभवतु, ह्रस्वीभवतु' इति पुनः पुनः वदन्ती निरन्तरं ताडितवती।

एवं ताडनेन घण्टा भग्ना सती एकत्र पतिता। अपरत्र निरन्तरं ह्रस्वत्वं प्राप्ता अग्रजस्य नासिका अदृश्यतां गता!

एवं स्वपत्न्याः अजागरूकतापूर्णेन व्यवहारेण अग्रजः आजीवनं नासिकारहितः अभवत्।



## अहो! कीटसमूहः!

इतरजन्तूनां शरीरेषु यावन्तः कीटाः भवन्ति ततोऽपि अधिकं रक्तवर्णीयस्य चिक्रोडस्य शरीरे भवन्ति इति श्रूयते। तन्नाम सामान्यतः १३,००० कीटाः तत्र भवन्ति!






# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अग्रणीः - | Leader | तिमिङ्गिलः - | Whale |
| अङ्गारः - | Charcoal | धमति - | Blows |
| अङ्गुष्ठः - | Thumb | पञ्जीकरणम् - | Registration |
| अनिर्वचनीयम् - | Indescribable | पिपासा - | Thirst |
| अनुमानम् - | Inference | प्रवालः - | Coral |
| अनुवृत्ता - | Continued | बालिशम् - | Childish |
| अवगुण्ठनम् - | Veil (for the face) | भषणम् - | Barking |
| अवादयत् - | Rang | भ्रातृजाया - | Sister-in-law |
| आसन्नप्रसवा - | A woman about to deliver | मिथ्यापत्रम् - | Fake letter |
| | | मुञ्चति - | Give up |
| इन्द्रधनुः - | Rainbow | युतकम् - | Shirt |
| उत्प्लवनम् - | Flying | विच्छेदिका - | Crack |
| कर्णाकर्णिकया - | Hearsay | वितस्तिः - | A measure of length |
| कलेवरः - | Corpse | | |
| कादाचित्कतया - | Rarely | विहितम् - | Sentenced |
| क्वथयति - | Boils | वेणुः - | Bamboo |
| गिलति - | Swallows | वैधव्यम् - | Widowhood |
| गीर्णवान् - | Swallowed | शोभायात्रा - | Procession |
| गृध्रः - | Eagle | समीकरणम् - | Repair |
| चिक्रोडः - | Squirrel | स्थगितः - | Stopped |
| चूषति - | Sucks | स्वर्णकारः - | Goldsmith |

* *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां डिसेम्बर्-८८ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'आगस्ट'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **को वा पश्येत् भिक्षार्थिनीं जरठाम्?**

द्वितीयचित्रम् - **प्रचलति यूनां नाट्ये मनोहरे।**

प्रेषकः - वि.आर्. मूर्ति, अनन्तपुरम्-५१५००२, आ.प्र.

---




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# निद्रा न आगता

| | |
|---|---|
| वरदः – किं भोः, निद्रा न आगता वा? तदारभ्य पुनः पुनः पार्श्व-परिवर्तनं कुर्वन् अस्ति? | I say, haven't you been able to sleep? I find you tossing on the bed! |
| प्रवीणः – सत्यं भोः, निद्रा एव न आगता। इदानीं कः समयः स्यात्? | Fact. I have not been able to sleep. What is the time like? |
| व – द्वादशवादनम् अतीतं स्यात्। | Maybe it is past 12. |
| प्र – एकत्र निद्राभावात् खेदः। अपरत्र एतेषां मशकानां सङ्गीतात् उद्वेगः। | Sleeplessness on one side. Humming of the mosquitoes on the other! |
| व – किं, मशकाः मशकारिं प्रविष्टवन्तः वा? दीपं ज्वालयामि वा? | What? You mean to say the mosquitoes have got into the net? Shall I switch the light on? |
| प्र – मास्तु, ते अन्तः न आगताः। किन्तु बहिः स्थित्वा एव कर्णसमीपे सङ्गीतं श्रावयन्ति। तदस्तु, भवतः किमर्थं निद्रा न आगता? | No need. They haven't, but they keep on humming near my ears from the outside. All right. How is it you haven't slept? |
| व – नूतने स्थले शयनं कृतम् इत्यतः स्यात्। अन्यच्च मम निद्रा अपि अल्पा एव। | Maybe, it is because the place is new. The fact also is, I sleep very little. |
| प्र – निद्रा अल्पा एव! अस्मिन् एव वयसि? | What? You sleep little, do you? At this age? |
| व – आम्। प्रतिदिनं प्रायः घण्टात्रयं घण्टाचतुष्टयं वा निद्रां प्राप्नोमि। शिष्टे समये केवलं शयनं, न निद्रा। | Yes. I sleep only for 3 to 4 hours on the whole. Rest of the time it is just lying down, no sleep. |
| प्र – एतद्विषये वैद्यं न दृष्टवान् वा भवान्? | You didn't consult the Doctor about this? |
| व – सर्वं कृतम्। सर्वं सुपरीक्ष्य अन्ते वैद्यः सूचितवान् यत् प्रतिदिनं द्विवारं शवासनं करणीयम् इति। | I did everything. After a thorough examination the doctor told me. I should do *Shavāsanā* (death pose) twice everyday. |



Estd. 1947

# CHANDAMAMA PUBLICATIONS

188, N. S. K. SALAI, VADAPALANI, MADRAS - 600 026, INDIA.
Phone: 423423, 421778 Grams: "CHANDAMAMA" Telex: 041-347

*Publishers*:

CHANDAMAMA—English, Hindi, Telugu, Kannada, Bengali, Gujarati, Assamese, Sanskrit; AMBULIMAMA — Tamil; CHANDOBA — Marathi
AMBILI AMMAVAN — Malayalam; JAHNAMAMU — Oriya
THE HERITAGE — English

मान्याः वाचकबान्धवाः

उत्तमाः कथाः, अपूर्वान् प्रसङ्गान्, उदात्तान् विचारान् च भवतां सम्मुखे ससन्तोषम् उपस्थापयताम् अस्माकं पत्रिकायाः मूल्यवर्धनप्रस्तावः अपि भवतां पुरतः उपस्थापनीयः आपतितः इति तु नायं सन्तोषस्य विषयः। वस्तुतः तु इतः पूर्वम् एव पत्रिकायाः मूल्यवर्धनप्रसङ्गे आपतिते अपि वयं शान्तेन मनसा सर्वं सोढवन्तः। पत्राणां मूल्यं यत् तीव्रं प्रवृद्धं, समग्रायां मुद्रण-प्रकाशनप्रक्रियायां यः व्ययः प्रवृद्धः, एतत्सर्वं न अविदितं भवताम् इति मन्यामहे वयम्।

एवम् अनिवार्यपरिस्थित्या चोदिताः वयं नवम्बर्-८८ मासतः चन्दमामायाः मूल्यं वर्धयिष्यामः, येन प्रत्यङ्कं मूल्यं रूप्यकत्रयं (रू. ३-००) भविष्यति।

एतस्मिन् सन्दर्भे सन्तोषस्य अपि काचित् वार्ता अस्ति एव। निरन्तरचिन्तनस्य फलभूतायाः, प्रतिमासं भवतां तोषयित्र्याः विस्माययित्र्याः च, नूतनायाः विशेषपूरण्याः (Supplement) प्रस्तुतीकरणे विशेषसन्नाहं कुर्वन्तः स्मः वयम्।

सेवामहे सदा भवतः सर्वान्, प्रार्थयामहे च सहकुर्वन्तु विभावयन्तु च अस्मान् इति।

इति भवदीयः

B. Viswanatha Reddi

**प्रकाशकः**